श्रीगणेशाय नमः

# लौकिकन्यायरत्नाकरः

यस्माज्जातं निखिलभुवनं जीव्यते येन जातं-
यस्मिन्नन्ते व्रजतिविलयं सच्चिदानन्दरूपे।
यस्यश्वासा निगमनिचया यश्च तन्मात्रमेय-
स्तं प्रत्यञ्चं शिशु शशिशिखंसाम्बमूर्ति नतोऽस्ति ॥१॥

यं भातं ह्यनुभाति लोकनिकरो यं चान्तरेणान्धता,
भासा यस्य च भाति सर्वमपि नो भायाच्च यद्भासने।
भाने यस्य च भातमेव निखिलं यः सज्जनानां गतिः,
स्वानन्दं तमहं प्रकाशममलं सोमं शिवं संश्रये ॥२॥

यो वाचा न निगद्यते न च सदा मानान्तरैरीक्ष्यते,
सर्वेषां वचसां य एव विषयः सर्वैश्चमानैर्मितः।
आत्मा यो निखिलस्य सर्वविदुषां प्राप्तोऽप्यवाप्यश्च यो-
गोविन्दं तमहं नमामि सततं भक्तप्रियं माधवम् ॥३॥

शम्भोरङ्के निविष्टा चलयति तनयोत्सङ्गमालम्ब्य बाल्या-
न्नासाभूषां करेणारुणकमलरुचाऽऽकृष्य संनामयंस्ताम्।
शम्भोर्भूयः कटाक्षैरमृतसुखकरैराश्रितः स्नेहयुक्तै-
र्मायाबालो द्विपास्यः प्रथमगणपतिः पातु नः पालनीयान् ॥४॥

लोकानां शङ्करोऽपि प्रवरसुखनिधिः स्वात्मरामाप्तकामो-
यद्दृष्ट्या स्पर्शनाद्वा किमपि सुखमहो याति रोमाञ्चगम्यम्।
तस्याः स्वानन्दमूर्तेश्चरणजलजजो रेणुराश्रित्य तूर्णं-
स्वान्तादर्शं मदीयं दुरितमलमलं तस्य दूरीकरोतु ॥५॥

कविर्मूको यस्य भवति, करुणादृष्टिरहितः,
कृपापात्रं मूकोऽनुभवति कवित्वं विधिसमम्।
प्रसन्ना वाग्देवी प्रचुरवरदा पुस्तककरा,
करोत्वावासं सा मम वदन आख्यातविभवा ॥६॥

विष्णोर्विद्यावतारं मुनिनिकरनुतं सूत्रकारं नमामि,
शम्भोर्ज्ञानावतारं यतिनिवहपतिं भाष्यकारं च वन्दे।

तत्पक्षे सन्निविष्टं द्विजपतिनिचयं चाश्रयेऽतीवभक्त्या,
यद्दिष्टेनाधनेय मम भवति शुभा शाश्वतात्र्यंबुद्धिः ॥७॥
विद्वांसो ये सुशीलाः परगुणगणने दक्षिणा दोषगुप्तौ
नो तेभ्यो भीर्वदेयुर्यदि मम विगुणं तद्भवेन्मेऽतिपथ्यम् ।
दुष्टानां तोषणे तु प्रवरगुणगणो नैव धाताऽपि शक्तः,
तस्मादस्मिन् यतिष्ये प्रलघुमतिरपि स्वामनुल्लङ्घ्यशक्तिम् ॥८॥
चेतो मा व्रज खेदमत्र विषये गाम्भीर्यमालोक्य हे,
स्वस्मिन्नल्पतमां च शक्तिमभितं शास्त्रप्रमेयं तथा ।
व्योम्नो यस्य हि नाप्यतेऽपि यतता तार्क्ष्येण पारं सदा,
तस्मिन् खे मशको न धावति वद स्वां शक्तिमालम्ब्य किम् ॥९॥

तव शक्तिविदः सन्तः स्तोष्यन्ते त्वत्कृतिं किल ।
उद्वहन्ती लघीयांसं भारं स्तुत्या पिपीलिका ॥१०॥
प्रकल्प्य लेखकं वा त्वां करुणावरुणालयः ।
कर्तेमं परमं रम्यं शम्भुः किन्तेऽनुचिन्तया ॥११॥
गुरून्नत्वा सुतत्त्वज्ञान् दयालून् रामवत्सदा ।
लौकिकन्यायरत्नानामाकरस्तन्यते मया ॥१२॥
न्यायार्थविषयं चैवोदाहृतिं च यथामति ।
वदिष्यामोऽत्र संक्षेपाद्विस्तरादपि कुत्रचित् ॥१३॥
प्रसङ्गादागतानां तु न्यायानां तत्र विस्तृतेः ।
अर्थमात्रं वदिष्यामः क्वचिदन्यामुदाहृतिम् ॥१४॥
प्रसङ्गादायाता अपि निगदविख्यातविषयाः,
न ते व्याख्यास्यन्ते पुनरसकृदुक्ताश्च विरलाः ।
पुनर्व्याख्यास्यन्ते विषयकथनादिप्रविततः,
पुरा प्रोक्तान् कांश्चित्पुनरपि वादिष्यामि विषये ॥१५॥
अर्थादर्थो न शब्दार्थ इत्याद्या वृद्धसूक्तयः ।
पूर्वैर्न्यायितया प्रोक्ता वदिष्यामस्ततस्तथा ॥१६॥
प्रसङ्गात्पठितेष्वत्र शास्त्रीयेष्वपि कस्यचित् ।
अक्षरार्थं वदिष्यामस्तात्पर्यं चैव कस्यचित् ॥१७॥
संदेशेन सुबोध्याः स्युः शिष्टा न्यायात्सुबुद्धिभिः ।
लौकिकेषु यथाबुद्धि यथासंभवमादरात् ॥१८॥
उदाहृतिं वदिष्यामः प्रायो वेदान्तशास्त्रगाम् ।
मीमांसान्यायगां कांचित्कांचिच्चापरशास्त्रगाम् ॥१९॥

आम्नायशिरसामस्या निबन्धत्वं न तावता।
स्याद्वैशेष्यात्तु तद्वाद इति न्यायसमाश्रयात् ॥२०॥

पञ्चीकृतस्य भूम्यादेः पृथिवीत्वादिकं यथा।
आम्नायान्तनिबन्धत्वं तथाऽस्य स्यादसंशयम् ॥२१॥

असाधारणधर्मस्य गन्धवत्त्वादिकस्य हि।
उपलम्भात्तथात्वं चेत्तत्रैवात्रापि वारितम् ॥२२॥

शास्त्रैकदेशसम्बद्धं शास्त्रकार्यान्तरे स्थितम्।
आहुः प्रकरणं नाम ग्रन्थभेदं विपश्चितः ॥२३॥

इति लक्षणयोगो हि विद्यतेऽत्र यतो ध्रुवम्।
आम्नायान्तनिबन्धत्वं तस्मादस्यापि निश्चितम् ॥२४॥

उपासनाः क्रियारूपाः श्रुत्यन्तेषु तथाकरे।
दृश्यन्ते हि तथाप्येषां वेदान्तत्वं यथा ध्रुवम् ॥२५॥

यथा चान्यनिबन्धेषु बहुष्वप्यन्यगोचरः।
विचारो दृश्यते तद्वद्भवत्वत्रापि न क्षतिः ॥२६॥

ससैन्धवेऽपि मौद्गे हि सूपे मौद्गत्ववद् ध्रुवम्।
श्रुत्यन्तस्य निबन्धत्वं निबन्धस्यास्य गम्यताम् ॥२७॥

तत्तदीयैरनूबन्धैरिदं स्यादनुबन्धवत्।
तदीयाः केऽनुबन्धाः स्युरिति चेत्त्वमवेहि तान् ॥२८॥

स्यादत्रोपनिषन्नाम छन्दसां काण्ड उत्तरः।
वेदान्तस्तदनुग्राहि सूत्रभाष्यादिकं तथा ॥२९॥

अधिकारी सविषयः सम्बन्धः सप्रयोजनः।
अनुबन्धा इति ख्यातास्चत्वारः सन्ति शास्त्रगाः ॥३०॥

अधीनवेदवेदाङ्गो ह्यापातब्रह्म बोधवान्।
बहुजन्मार्जितैः पुण्यैः सम्यगाराधितेश्वरः ॥३१॥

ब्रह्म नित्यमनित्यन्तु जगदेवं विवेचकः।
ऐहिकामुष्मिकेभ्यश्च भोगेभ्यो विरतः सदा ॥३२॥

यत्नेन मनसो नित्यं विषयेभ्यो निवर्तकः।
तेभ्यो बाह्येन्द्रियाणाञ्च बलादाकर्षकः सदा ॥३३॥

उभयेषां निवृत्तानां तथा स्थापनयत्नवान्।
शीतोष्णसुखदुःखानां तथा मानापमानयोः ॥३४॥

सहिष्णुः श्रवणादौ च सर्वदैव समाहितः ।
गुरुवेदान्तवाक्येषु केवलाद्वैतवृत्तिषु ॥३५॥

दृढविश्वासवान् धीरः सत्यवादी दयानिधिः ।
अहं बद्धो विमुक्तः स्यां कथमेवं विचिन्तकः ॥३६॥

वेदान्तेष्वधिकारी स्याद् वेदान्तज्ञैर्विनिश्चितः ।
तद्विषयस्तु जीवः स्यादत्यन्ताभेदः परात्मना ॥३७॥

तत्रैव तस्य तात्पर्यं नान्यत्रैवं विनिश्चितेः ।
स एव विषयस्तस्य न्यायविद्भिर्विनिश्चितः ॥३८॥

यत्परः शब्द इत्यादेर्न्यायादर्थव्यवस्थितिः ।
गङ्गायां घोष इत्यादि लौकिकेष्वपि दृश्यते ॥३९॥

प्रयोजनवति श्रुत्यास्तात्पर्यञ्च विनिश्चितम् ।
स्वध्यायस्य विधेर्नूनं विरोधो ह्यन्यथा भवेत् ॥४०॥

तच्च प्रयोजनं ब्रह्माद्वैतज्ञानेन सिध्यति ।
ब्रह्मविद्भवति ब्रह्मेत्यादिशास्त्रानुशासनात् ॥४१॥

न भेदे तस्य तात्पर्यं सिद्धत्वादन्यमानतः ।
प्रयोजनविहिनत्वान्निन्दितत्वाच्च सर्वथा ॥४२॥

मृत्योः स मृत्युमाप्नोति योऽत्र नानेव पश्यति ।
अल्पमत्यन्तरं कुर्वन् बिभेतिति श्रुतौ श्रुतम् ॥४३॥

प्रधानादौ न तात्पर्यं श्रुतेः किन्त्वन्तरात्मनि ।
उपक्रमोपसंहारमुखैर्लिङ्गैर्विनिश्चयात् ॥४४॥

मतान्तरनिरासेन ह्येतदर्थप्रपञ्चनम् ।
भविताऽग्रे तदेतस्य विस्तराद्धुपरम्यते ॥४५॥

प्रतिपाद्यस्य चैक्यस्य जीवात्मपरमात्मनोः ।
वेदान्तानाञ्च सम्बन्धं बोध्यबोधकतां विदुः ॥४६॥

तेषामेकत्वबोधेनोत्पाद्योत्पादकता तथा ।
प्रयोजकप्रयोज्यत्वं सम्बन्धः शास्त्रमोक्षयोः ॥४७॥

हेतुमद्धेतुभावश्च सम्बन्धो मोक्षबोधयोः ।
सम्बन्धोऽभिहितोऽभिज्ञैरुक्तभेदैश्चतुर्विधः ॥४८॥

तदद्वैतावरकस्याऽस्य मूलाज्ञानस्य बाधनम् ।
सविलासस्य संप्राप्तिश्चानन्दस्य प्रयोजनम् ॥४९॥

कल्पितस्य निवृत्तिश्च नाधिष्ठानातिरेकिणी ।
रज्जुसर्पनिवृत्तिर्हि न रज्जोरतिरिच्यते ॥५०॥

प्रत्यगात्मतया तस्य प्राप्तत्वेऽपि च सर्वदा ।
कण्ठचामीकरन्यायात्तत्प्राप्तिरुपचर्यते ॥५१॥

ब्रह्मैव सन्नयं ब्रह्म प्राप्नोतीति श्रुतौ श्रुतम् ।
विमुच्यते विमुक्तश्च निवृत्तश्च निवर्तते ॥५२॥

अक्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत् ।
इष्टस्यार्थस्य संप्राप्तौ को विद्वान् यत्नमाचरेत् ॥५३॥

इति न्यायं समाश्रित्य दुर्दुरूढदुरुक्तयः ।
यास्ताः सम्यङ् निरस्ता स्युः श्रुतिन्यायसमाश्रयात् ॥५४॥

अनाद्यविद्यया तस्यावृतेः सोऽप्राप्तवद्भवेत् ।
विद्यया तन्निवृत्तौ तु प्राप्त इत्युपचर्यते ॥५५॥

स्वाधिष्ठानातिरेकेणन सक्ता कल्पितस्य वै ।
विद्यया तन्निवृत्तिस्तूपचारादिति निश्चिनु ॥५६॥

स्वबाहौ कल्प्यमानस्य भुजङ्गस्य निवर्तजम् ।
न दृष्टं वस्तुतो लोके दण्डाद्यैर्वाह्यसर्पवत् ॥५७॥

एवञ्च द्विविधेऽपिस्यादैकरूप्यं प्रयोजने ।
आत्मरूपेण संस्थानं ततः सिद्धं प्रयोजनम् ॥५८॥

संक्षेपेणानुबन्धा हि श्रौताः प्रोक्ता यथामति ।
तदनुग्राहिसूत्रादेस्त एवैकं विनिश्चिनु ॥५९॥

तथा तस्य निवन्धानामनुवन्धास्त एव हि ।
अथाप्येतन्निबन्धत्वादनुवन्धा भवन्ति ते ॥६०॥

**अत्र निबन्धपदं सर्वत्र प्रकरणपरम् ।**

ननु किमिदं सूत्रादेरूपनिषदनुग्राहित्वं सूत्रादिनिष्ठविचारस्य तदर्थावबोधहेतुत्वमितिचेन्न, तद्वाक्येभ्य एव तदर्थप्रतिपत्तिसम्भवेन विचारवैयर्थ्यात् । ततस्तदप्रतिपत्तौ तु विषयासिद्धे विचारासंभवात् । अभ्युपगम्य चेदमुक्तम् । वस्तुतस्तु वेदान्तविषय एव न सम्भवति, जीवब्रह्मैक्यस्य तद्विषयत्वाद्विरुद्धधर्माक्रान्तयोश्च तयोस्तदसंभवात् ।

अथाहं कर्ता भोक्तेति प्रतीयमानो जीव एव विषयः सम्भवति तथा चारम्भणीयैव शारीरकमीमांसेति चेन्न, तस्त प्रत्यक्षसिद्धत्वात्तेनैवरूपेण विचार्यत्वानुपपत्तेः ।

ननु विभुत्वनित्यत्वादिना जीवरूपस्य सर्वज्ञत्वादिना परमेश्वरस्याकाशादि-सृष्टिप्रकारस्योपास्नाभेदाभेदादिप्रकारस्य च मानान्तरागोचरस्य विचार्यत्वं मुमुक्षूणां युज्यत इति चेन्न, अद्वैतमते प्रत्यगभिन्नब्रह्मबोधस्यैव मुक्तिहेतुत्वेनेरस्य सर्वस्य तदुपयोगितयैव मीमांस्यत्वेन तदसम्भवेऽन्यमीमांसाया वैयर्थ्यापातात् ।

न च कुर्वे भुञ्जे इत्यादिप्रत्यक्षस्य स्थूलोऽहं कृशोऽहमित्यादि विसंवादिप्रत्यक्ष-सजातीयस्य निरस्तसमस्तदोषशङ्कस्य स्वार्थपरश्रुत्यन्तविरुद्धस्योपलभ्याप्सु चेद्गन्धं केचिद् ब्रूयुरनैपुणाः, पृथिव्यामेव तं विद्यादपो वायुं च संश्रितमिति वचनविरुद्धस्य सुरभिजलं सुरभिर्वायुरिति प्रत्यक्षस्य भौमावयवसंयोगेनेवान्तःकरणतादात्म्याध्यासेनौ-पाधिककर्तृत्वादिग्राहित्वेन भ्रान्तित्वसंभवे स्वाभाविकासङ्गत्वबोधकवेदान्तबाधितानां कर्तृत्वादीनां न जीवेशैक्यविरोधितेति विषयसम्भवेन मीमांसारम्भोपपत्तिरिति साम्प्रतम् प्रत्यक्षागमयोर्विप्रतिपत्तौ प्रत्यक्षस्योपजीव्यत्वेन तदविरोधाय वेदान्यथानयनस्यैवोचितत्वात् । अन्यथागमार्थज्ञानस्यैवानुदयप्रसङ्गात् । कर्तृत्वादीनामिव वर्णपद-तत्प्रत्यक्षादीनामपि बाधप्रसङ्गेन मरीचितोयादिवत् कार्यासमर्थत्वापत्तेः ।

ननु तेषां तात्त्विकत्वबाधेऽपि व्यावहारिकत्वं न बाध्यते, तावन्मात्रेण च कार्यकारित्वोपपत्तेर्नोपजीव्यविरोधः, उपजीव्यस्य व्यावहारिकत्वस्याबाधात् बाधितस्य च तात्त्विकस्यानुपजीव्यत्वादिति चेन्न, पदार्थेषु तात्त्विकत्वव्यावहारिकत्वविभागस्य वैदिकबाधनिश्चयात्प्रागसिद्धेः ।

तन्निश्चये हि सति बाधितानां तात्त्विकत्वासंभवेन प्रातीतिकत्वे कार्यक्षमत्वा-सम्भवेन च मरीचितोयादिविलक्षणतया व्यावहारिकत्वं नाम धर्मान्तरमर्थक्रियाप्रयोजक-मुपगन्तव्यम्, तथा च सति सति द्वाधे व्यावहारिकत्वार्थक्रिययोः प्रयोज्यप्रयोजकत्वे तत्त्वश्चोपजीव्य विरोधपरिहारेण बाध इति प्राप्तं परस्पराश्रयत्वम् अथोपक्रममोप-संहारैकरूप्यादिलिङ्गैर्निर्विशेष प्रत्यगभिन्नब्रह्मगोचरस्य तात्पर्यस्य निर्धारणेन तन्निर्वाहाय प्रत्यक्षस्यातत्त्वावेदकत्वसिद्धावुक्तरीत्याव्यावहारिकत्वमिति चेन्न, उपजीव्य-प्रमाणविरुद्धेऽर्थे तात्पर्यकल्पनस्यैवानुचितत्वात् ।

न चार्थोत्तरतात्पर्यकत्वउपक्रमादिसहितवाक्यस्वारस्यभङ्गापत्तिरिति-वाच्यम् । इष्टापत्तेः । तवापि प्रत्यक्षस्वारस्यभङ्ग आपन्नः । गृह्यमाणं ज्ञानं स्वतः प्रामाण्याङ्गीकारात्प्रमाणत्वेन गृह्यते तथा च प्रथमोपस्थितप्रामाण्यबाधोऽप्यापन्नः ।

न च चरमोपस्थितोपजीवकस्वारस्यानुसारेण प्रथमोपजीव्यस्वारस्यबोधो न्याय्यः । किन्तु वेदान्तस्वारस्यबाध एव उपजीवकगतत्वाच्चरमोपस्थितत्वाच्च । अत एव आदित्यो यूपो यजमानः प्रस्तर इत्यत्र स्वारसिकार्थस्य प्रत्यक्षबाधेन तेजस्वित्व-क्रतुनिर्वर्तकत्वगुणमादाय सामानाधिकरण्यमङ्गीक्रियते ।

न च स्तावकवाक्येषु तथोपगमेऽप्यज्ञातज्ञापकेषु प्रत्यक्षानुसार इति मन्तव्यम्। सोमेन यजेत कृष्णपलं श्रपयेदित्यत्र प्रत्यक्षविरोधपरिहाराय मन्वर्थलक्षणोष्णीकरण-पर्यन्ततत्रयोरुपेतत्वात्। ब्रह्मवादिभिरपि तत्त्वमस्यादिवाक्येसु जहदजहल्लक्षणायास्त-दर्थमेवाङ्गीकाराच्च।

किञ्च प्रत्यक्षप्रामाण्यज्ञानं निरवकाशं श्रुतिस्तु लाक्षणिकेऽप्यर्थे सावकाशा, अतः सावकाशनिरवकाशयोर्निरवकाशं बलीय इति न्यायेनापि प्रत्यक्षप्रामाण्यज्ञानमेव बलीयः।

न च व्यावहारिकप्रामाण्ये सावकाशं तत्। मायावादिपरिकल्पिताया वस्तु-व्यवस्थापकत्वानुपत्तेः। स्यादेतत्, पीनोऽहं कृशोऽहं मनुष्योऽहमन्धोऽहं बधिरोऽहं मूकोऽहमितिशरीरेन्द्रियधर्माणां भासमानानामात्मनि तत्तद्धर्माध्यासपूर्वकत्वं वक्तव्यम्। अतो विसंवादि पीनोऽहमित्यादिप्रत्यक्षसजातीयस्य करोमीत्यादेरप्यन्तःकरणतादात्म्यपू-र्वकं तद्धर्मावगाहित्वमेवोचितम्। तथा च संभाविना प्रामाण्येन तेन कथं तद्विपरीत-स्यागमस्यान्यथानयनम्। प्रत्युत सुरभिजलमिति प्रत्यक्षस्येवागमेन तद्बाध एवोचितः। उपजीव्यत्वप्रथमोपस्थितिनिरवकाशत्वानामसंभाविताप्रामाण्ययोः सन्निपात एव प्राब-ल्यप्रयोजकत्वम्।

आदित्यो यूप इत्यादौ चान्यथानयने गत्यन्तरमेवानुसरणीयमिति चेन्मैवम्, पीनोऽहमित्येवं रूपेण देहात्माभेदग्राहिबोधस्यैवासंप्रतिपत्तेः। तयोरभेदबोधस्य तद्भेदा-ग्रहजन्यत्वेन तद्भेदग्रहे सत्यसंभवात्।

तद्भेदग्रहश्च मम देह इत्यभिज्ञारूपः प्रसिद्धतरः। प्रत्यभिज्ञयाऽपि च स गृह्यते य एवाहं शैशवे पितामहमन्वभूवं सोहं वार्द्धके प्रपौत्राननुभवामीति देहएवात्र प्रत्यभि-ज्ञायते इति चेन्न, तस्या अवस्थाद्वयानुयायिवस्तुगोचरत्वात्।

देहयोश्च परिमाणभेदेन भिन्नतयाऽनुयायित्वानुपपत्तेः अवयवोपचयापचयाभ्यां हि पीनताकृशतादिरूपः परिमाणभेदो वाच्यः। अवयवोपचये आगतैरवयवैः पूर्वं सिद्धा-वयविनि निवेशायोग्यैः पूर्वैः सह मिलित्वाऽवयव्यन्तरमारभ्यते, अपचये त्ववयविभागे-नारम्भकसंयोगनाशेन पूर्वावयविनि ध्वस्ते खण्डोऽवयव्यारभ्यत इति देहयोर्भेदेन प्रत्य-भिज्ञागोचरत्वासंभवः। अतश्च प्रत्यभिज्ञाबलादनुयाय्यात्माङ्गीकार्यः। देहश्चनानुयायी अतः प्रत्यभिज्ञाबलादपि तद्भेदोऽवगतः। स्वप्ने च देवदेहमात्मानमनुभूय प्रबोधे नर-विग्रहं पश्यन्नपि प्रत्यभिजानीते य एवाहं स्वप्ने सुरमात्मानमन्वभूवं स एवाहं तं नर-तयाऽनुभवामि इति। तत्र च देहयोर्भेदः स्पष्टमनुभूयते।

ननु तावन्नात्मनोऽवस्थाद्वय ऐक्यं देहयोश्चभेदः इत्येतावत् सिद्धयति। तत्रापि परिमाणभेदाद् द्रव्यभेद आनुमानिकः। स्वाप्नजाग्रद्देहयोस्तु स प्रत्यक्षः। ताभ्यामा-

त्मनो भेदस्त्वानुमानिक एव। आत्मा देहेभ्यो भिन्नः ब्यावर्तमानेष्वनुवर्तमानत्वात्, येषु व्यावर्तमानेषु यदनुवर्तते तत्तेभ्यो भिन्नं यथा मणिभ्यः सूत्रं तथा चाऽयं तस्मात्तथेति आनुमानिकभेदग्रहश्च नापरोक्षभ्रमविरोधीति चेन्न,

व्यावर्तकप्रत्यक्षस्य व्यावृत्ति प्रत्यक्षव्याप्यत्वं स्थाणुत्वप्रत्यक्षेण पुरुषभेदप्रत्यक्षात्तावदङ्गीकार्यम्, प्रकृते च द्वाभ्यां व्यावर्तकस्यैक्यस्यात्मनि साक्षात्कारात्तद्भेदसाक्षात्कारोऽप्यवश्यं भावी एवं वाह्यान्तःकरणाध्यासोऽपि न संभवति, तत्रापि मम चक्षुर्मम श्रोत्रं मम मनः इति भेदप्रतीतेः। कथञ्च बहुत्वेन निश्चितानां देहेन्द्रियान्तःकरणनां प्रत्यभिज्ञावधृतैक्य आत्मन्यध्यासः, बहुत्वैकत्त्वलक्षणवैलक्षण्यग्रहस्याभेदभ्रमविरोधित्वात्।

एवञ्च नरोऽहमित्याद्यभेदभ्रमो युज्यते। येन तद्दृष्टान्तेन करोमीत्यादेरप्रामाण्यशङ्काकलङ्कितत्वेनागमाद् दौर्बल्यं संभाव्येत, तत्सिद्धमुपजीव्यप्रत्यक्ष स्वारस्यानुसारेणागमस्वारस्यभङ्ग इति।

नचैवं सुरभीत्यादिप्रत्यक्षस्यापि शास्त्रेणबाधो न स्यादिति शङ्क्यम्, जले हि सौरभाश्रयकुङ्कुमादिसंयोगः वायौ च कुसुमवाटिकातो निःसृत एव तथाप्रतीतिरिति तत्रापि सौरभाधार पुष्पावयवसंपर्कः संप्रतिपन्नः। तत्र मन्दानां सौरभासंसर्गाग्रहसंभवाज्जलादौ तदध्यास उपपद्यते इति युक्तं स्मृतेस्तत्र विवेचकत्वम्। नैवं कर्तृत्वाश्रयभूतं किञ्चिद् द्रव्यं प्रसिद्धमस्ति येन तदुपाधिकः कर्तृत्वादिबोध आत्मनि भ्रमरूपः स्यात्।

ननु नरोऽहमित्यादिप्रत्ययाभावे शब्दाभिलापरूपः सामानाधिकरण्यव्यवहारः कथं भवेत् नरोऽहमिति व्यवहर्तव्यबोधाभावे व्यवहारासंभवात्।

ननु नायं व्यवहारः सामानाधिकरण्यगोचरः किन्तु देहसम्वन्धविषयः। अर्श आद्यच्पत्ययसंभवात्। अन्धादिशब्दानां विकलाङ्गवाचिनां गणे पाठात्। नरमनुष्यादि शब्दानान्त्वाकृतिगणत्वात्संग्रहो भविष्यति। अचश्च तदस्यास्त्यस्मिन्निति मतुबिति विहितमत्वर्थीयतया सम्बन्धवाचकत्वमुपन्नमिति चेन्न,

गच्छामि क्लिश्यामि कुणिरित्यादिव्यवहृतीनां तथा निर्वाहानुपत्तेः। तत्रारोपस्यात्रत्याङ्गीकारे अन्धोऽहमित्यादावपि तथैवास्तु। न चैवं गणे विकलाङ्गाभिधायिनां पाठो व्यर्थः स्यादिति शङ्क्यम्, स्वरार्थं पाठसंभवात्।

वर्णाभिधायिनां नीलादिपदानां मतुब्लोपेनैव सम्बन्धबोधोपपत्तौ गणपाठस्य स्वर एव प्रयोजनमित्यङ्गीकार्यं तत्तुल्यमन्धादिपदेष्वपि।

ननु शुक्लैः प्रासादैः धवले पुरे शुक्लं पुरमिति प्रयोगः शुक्लगुणविशिष्टप्रासाद-वैशिष्ट्यावगाहीति सम्बन्धद्वयज्ञापनाय प्रत्ययः परमावश्यक इति साम्प्रतम्,

तत्र सन्निवेशविशेषविशिष्टा गृहा एव पुरमिति स्वीकारे साक्षादेवसम्वन्धः शौक्ल्यस्येति-न प्रत्ययद्वयापेक्षा। गृहाश्रयभूतलस्यैव पुरत्वे परम्परासम्वन्धस्यैकेनैव बोधनान्नप्रत्ययद्वयाकाङ्क्षा। इतरथाऽश्वेतत नगरमपुष्यद्वनमित्यत्र का गतिः। अतः सामानाधिकरण्यव्यवहारोपपादकत्वेन देहेन्द्रियाद्यारोपोऽङ्गीकार्यं इति चेन्न,

भेदग्रहेणाध्यासानुत्पत्तौ व्यवहारस्य गौणत्वोपपत्तेः। गृहीतभेदयोर्ह्यग्निमाणवकयोरग्निर्माणवक इति व्यवहारो गौण इति संप्रतिपन्नम्।

अध्यासवादिनापि कायव्यूहवतां योगिनामद्वैततत्त्वसाक्षात्कारवतां जीवन्मुक्तानाञ्च सर्वव्यवहारो गौणोऽवश्यं स्वीकार्यः। तस्मान्मनुष्योऽहमिति दृष्टान्तेनाप्रामाण्यशङ्कया अनुन्मेषान्निर्णीतप्रामाण्येनोपजीव्यतया प्रवलेन प्रत्यक्षेण श्रुतेरद्वैतात्मावगाहित्वे विरोधादर्थान्तरपरतैवोपगन्तव्येति विषयाभावः।

तदभावे च प्रयोजनमपि न संभवति। विषमप्रमिति हि साक्षात्प्रयोजनम्। न चासंभाविते विषये सा संभवति। परमप्रयोजनं च प्रत्यगभिन्नब्रह्मगोचराविद्याबाधपूर्वकं नित्यसिद्धब्रह्मात्मनावस्थानं न च तदपि संभवति मानाभावेन ब्रह्मात्मताया एवाभावात्, श्रुतेरन्यपरत्वात् प्रमाणान्तस्य चाऽभावात्। अतो विषयप्रयोजनयोरभावेन शारीरकमीमांसा नैवारम्भणीया।

स्वाध्यायाध्ययनविधिप्रयुक्तमीमांसायाः पूर्वमीमासाशास्त्रेणैव कृतत्वादपि नैवारम्भणीयमिदं शास्त्रम्। अर्थवादस्य हि विधिशेषतया प्रामाण्यं वेदान्तानां च भूतवस्तुबोधकत्वेनार्थवादरूपत्वादुपपद्यत एव विचारितत्वम्।

ननु विधिशेषभूतानां वायुर्वै क्षेपिष्टेत्यादीनामेव तत्र विचारितत्वं न सदेवेत्यादीनामिति चेन्न,

कर्तृस्तावकत्वेन तेषामपि विधिशेषत्वात्। "संभवत्येकवाक्यत्वे वाक्यभेदो हि नेष्यते" इति न्यायात्। न च प्रकरणान्तरत्वम्, पूर्वोत्तरकाण्डयोर्नियतपौर्वापर्यस्य प्रकरणान्तरत्वेन वक्तुमशक्यत्वात्। तस्मादनारम्भणीयमिदं बादरायणीयं तन्त्रमिति प्राप्तम्!

अत्र समाधिरभिधीयते—

यदुक्तं श्रुत्यन्तरवाक्येभ्यस्तदर्थावगतौ विचारशास्त्रवैयर्थ्यं तदनवगमे तु विषयासिद्धिरित्यादि तत्र तावदुच्यते—

यद्यपि वेदान्तवाक्येभ्य एव तदर्थः प्रजायते तथापि तेषां परपरिकल्पितार्थान्तरपरत्वसंशयादसंभावनादिपुरुषदोषप्रतिबन्धवशाच्च प्रमासामग्रीतो जायमानापि सा नाविद्यानिवर्तनक्षमा किन्तु मज्जनोन्मज्जनन्यायेनाप्रतितिष्ठितैव भवति। अतस्तादृश-

प्रतिबन्धनिरासेन प्रमाणजन्यायाः प्रमितेः स्वविषयप्रतिष्ठत्वस्थिरीकरणाय विचार-शास्त्रमारम्भणीयम्।

यत्तूपगम्येदमुक्तं वस्तुतस्तु विरुद्धधर्माक्रान्तयोरैक्यायोगेन जीवब्रह्मैक्यविषयो न संभवतीत्यादिग्रन्थसन्दर्भेण प्रलपितं तत्र ब्रूमः—

वेदतदन्यप्रामाण्यविरोधे हि वेदस्यैव प्राबल्यं वैदिकैरभ्युपेयमित्युत्सर्गः। "प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्थितम्" इति स्मृतेः।

नन्वियं स्मृतिर्वेदैकवेद्यस्वर्गयागादिसाध्यसाधनभावादौ तत्प्राबल्यप्रतिपादन-परा न तु प्रत्यक्षसाधारणात्मविषयेति चेन्मैवम्, तथा संकोचकल्पने मानाभावात्। एकविषयानेक विरुद्धमानसन्निपाते निर्णयोपयोगितया प्राबल्यप्रतिपादनेनापेक्षितार्थ-समर्पकत्वे संभवति विरुद्धमानान्तराप्रसक्त्या वैयर्थ्यापादकस्य वेदैकवेद्यविषयत्वस्य कल्पयितुमनुचितत्वाच्च।

उपजीव्यप्राबल्यनयश्च न प्रकृते संभवति। सामान्यन्यायस्योपजीव्योपजीव-कयोरेवोपदेशानुपदेशत्वे विपरीतं बलाबलमिति विशेषन्यायेन बाधात्। न चाप्रयोज-कत्वमनुपदेशस्य दुष्टत्वसंभवात्। स च दोषः क्वचिदप्रामाण्यशङ्काकलङ्कितत्वं क्वचि-द्विलम्बतप्रवृत्यादिकम्। तद्यथा कुण्डपायिनामयने श्रुतस्य यो होता सोऽध्वर्युरिति वाक्यस्य विरुद्धार्थकयोर्होत्रध्वर्युशब्दयोः सामानाधिकरण्यनिर्वाहाय प्रथमश्रुत होतृ-शब्दानुसारेणाध्वर्युशब्देन लक्षणयोपस्थापितेऽध्वर्युकार्ये होतृविधायकत्वे स्थिते यूप-परिव्याणे करणस्य वीरसीति मन्त्रस्यान्यत्राध्वर्युप्रयोज्यस्याप्यत्र वचनमनुसारेणहोतृ-प्रयोज्यत्वं प्राप्नोति। अतिदेशानुसारेण च होतृकार्यान्तर्गते "युवा सुवासा" इति वर्तमान-तानुवादिमन्त्रे होता प्राप्नोति।

न चोभावपि होत्रा प्रयोक्तुं शक्यौ। परिव्याणसंकल्पमारभ्य तत्समाप्तिपर्यन्तं सर्वोऽपि वर्तमानकाल इति तावन्तं कालं वर्तमानानुवादी मन्त्रः प्रयोक्तव्यः। परिव्याणा-व्यवहितपूर्वक्षणे करणमन्त्रः समापनीयः इत्येवमेककालसमावेशात्।

तत्रान्यतरबाधे प्राप्ते वर्तमानतानुवादिमन्त्रबाधएवाश्रितः। तत्र होतुरति-देशस्तत्कार्यस्य च प्रत्यक्षेण यो होता सोऽध्वर्युरित्यनेनोपजीव्यः। प्राप्तोभयानुवादेन सम्बन्धमात्रविधानात्।

नचात्र सावकाशनिरवकाशन्यायः। वचनस्य परिवीरसीतिमन्त्रातिरिक्तेऽप्या-ध्वर्यवेसावकाशत्वात्।

उपजीव्यस्यापि विलम्बितप्रवृत्तिकतया शीघ्रप्रवृत्तिकेनोपदेशेन बाध इत्येवमङ्गी-कार्यम्। प्रकृतेऽपि संभाविताप्रामाण्यस्य प्रत्यक्षादेरुपदेशेन तद्विपरीतेन बाधो भविष्यति। एवमुपजीव्योपजीवकयोरेव तात्पर्यलिङ्गोपेतस्योपजीवकस्य तद्रहितादुप-जीव्यात्प्राबल्यमुपेयम्।

अद्वैतगोचरोपक्रमादीनां हीदमेव प्रयोजनं यन्मानान्तरानुसारेण तत्त्वमस्यादिवाक्यस्यार्थान्तरशङ्कायाः करणम्। न च तथा प्रत्यक्षादेस्तत्त्वावेदकत्वमेवोपेयमित्यत्र किञ्चिन्निर्बन्धकारणमस्ति। अतोऽन्यथासिद्धिशङ्काकलङ्कितप्रत्यक्षविरोधमनादृत्य तात्पर्यग्रहे न काचिदनुपपत्ति.।

अतएव लाघवरूपतात्पर्यलिङ्गोपेतेन "हिरण्यगर्भः समवर्ततताग्रे" इत्याधारमाधारयतीति विधिना हिरण्यगर्भ इति मन्त्रस्यान्यथानयनमुपेतम्। इदं हि वचनं वायव्यपशावाम्नायते। प्रकृते द्वावाधारौ प्रथमः प्राजापत्यो द्वितीय ऐन्द्रः समन्त्रकस्तत्रैव च मन्त्रजन्यादृष्टं नत्वमन्त्रके पूर्वस्मिन्।

तत्र यदि आधारसामान्यप्रतिपादकेनानेन विधिना मन्त्रलिङ्गस्वारस्यानुरोधेन प्रजापतिर्वै हिरण्यगर्भ इत्यर्थवादस्वारस्यानुरोधेन च पूर्वाधार एव मन्त्रो विधीयते तर्ह्यदृष्टं किञ्चित्परिकल्प्यं तस्याद्याधारोपकारकत्वं तत्र मन्त्रजन्यत्वसामान्यं तद्विशेषश्चेति बहु कल्प्यं स्यात्।

द्वितीयाधारे तद्विधानेतु प्रकृतौ तस्य मन्त्रजन्यादृष्टसम्बन्धः क्लृप्त इति विधेर्मन्त्रविशेषसम्बन्धमात्रपरत्वमिति लाघवरूपतात्पर्यलिङ्गसहितेन द्वितीयाधारे मन्त्रविधानेन विनियोज्यत्वाद्विनियोगविध्युपजीव्यस्यापि स्वरसतो हिरण्यगर्भप्रकाशकस्य लक्षणयेन्द्रप्रकाशकत्वमुपेतम्। तत्सिद्धं प्रबलागमप्रमाणानुसारेण वर्णपदादिस्वरूपमात्रोपजीवनमुपगम्यानपेक्षितलौकिकमाननिष्ठतत्त्वावेदकत्वबाधेऽपि न काचिदनुपपत्तिः।

एवञ्च यत्प्रामाण्यज्ञानस्य प्राथम्यं प्राबल्ये प्रयोजकमुक्तं तद्विपरीतं तत्रैव हि प्रथमस्थं प्राबल्यं यत्रोत्तरेण तदपेक्ष्यते। यथा प्रजापतिर्वरुणायाश्वमनयत्स स्वां देवतामार्च्छत्सपर्यदीर्यत स एनं वारुणं चतुष्कपालमपश्यत्तन्निरवपेदित्युपक्रमेण संजातविरोधिनादातुरिष्टिरितिनिश्चये एकवाक्यतापन्नानां संभूयैकार्थप्रतिपादकत्वमितिन्यायेन तमपेक्ष्यमाणस्य यावतोऽश्वान् प्रतिगृह्णीयात्तावतो वारुणांश्चतुष्कपालान्निर्वपेदिति तदुपसंहारस्य तद्विरोधेन प्रतिग्रहीतुरिष्टिरित्येवं रूपार्थबोधकत्वानुपपत्त्या णिजन्तभविन दातुरिष्टिरित्येवं रूपार्थज्ञापकतोपेयते।

अनपेक्ष्यत्वे तु स्वप्रमाणानुसारेण लब्धात्मकस्योत्तरज्ञानस्यैव प्राबल्यम्। बर्हिष्यवमानार्थं हविर्धानाद्धिर्निर्गच्छतामाम्नातान्वारम्भाणां विच्छेदे कृतश्चिन्निमित्तात्प्राप्ते प्रायश्चित्तमाम्नायते। यद्युद्गाता परिच्छिद्येता दक्षिणं यज्ञं परिसाप्य तेन पुनर्यजेत तत्र तद्दद्याद् यत्पूर्वस्मिन् दास्यन् स्यात्। यदि प्रतिहर्ता सर्वं वेद सं दद्यादिति तत्र विरुद्धयोः क्रमेणापच्छेदे कर्तव्यतया प्राप्तयोः समुच्चयासंभवादेकतरबाधेऽवश्यमाश्रयितव्ये पूर्वनैमित्तिकज्ञानापेक्षेणस्वप्रमाणप्राप्तेनोत्तरनैमित्तिककर्तव्यताबोधेनपूर्वनैमित्तिक कर्तव्यताबोधबाध एवाश्रितः।

लोके इदं रजतमितिबोधस्योत्तरेण नेदं रजतं शुक्तिरेवेतिबोधेन बाधदर्शनात्। तथा चोत्तरेण. श्रौतात्मबोधेन प्रत्यक्षप्रामाण्यबोधस्यैव बाधो भविष्यति। एतदर्थ-प्रपञ्चो वृक्षप्रकम्पनन्यायेन भविष्यतीत्युपरम्यते।

किञ्च व्यावहारिकत्वेन सावकाशस्य प्रामाण्यज्ञानस्य न सावकाशनिरवकाश-न्यायविषयत्वम्। अस्तु वा निरवकाशत्वं तथापि पीनोऽहमित्यादिभ्रमेषु प्रामाण्य-ग्राहकस्येव कर्तृत्वादिबोधप्रामाण्यग्राहकस्यापि न क्वाप्यवकाशः कल्प्यः।

यथा हि विशेषशास्त्रोपदेशापर्यालोचनमूलस्य तद्विषयेऽपि सामान्यशास्त्राति-देशाभ्यां जनितस्य बोधस्य न कोऽपि प्रवृत्तिसंवादि विषयः कल्प्यते, प्रातिभासिकत्वो पपत्तेः। तथा प्रकृतेऽपि यच्च पीनोऽहमित्यादि भ्रान्तिरसंप्रतिपन्नभेदस्य गृहीतत्वादिति तत्र मम देहो मम चक्षुरित्यादिरूपेण भेदग्रहो न पीनोऽहमित्यादिरूपस्याभेदग्रहस्य विरोधी, रूपान्तरेण भेदग्रहस्य रूपान्तरेणाभेदग्रहग्रहाविरोधित्वात्। चैत्रमैत्रयोः स्वरूपतो भेदेदन गृहीतयोरपि व्यत्यासेन भ्रान्तिगोचरत्वदर्शनात्।

किञ्चायं संबन्धग्रहो न साक्षाद् भेदग्रहः, स च पीनस्य देहो घटस्य स्वरूप-मित्यभेदेऽपि दृश्यते इति कथं ततो भेदनिर्णयः। नचोभाभ्यां देहाभ्यां बाल्यवार्धक-योरेकत्वेन प्रत्यभिज्ञारूपाद् भेदकसाक्षात्काराद्यदात्मनि भेदो गृह्यते इति युक्तिमत्, परिणामवादे ह्यवयवोपचयापचयाभ्यां न देहभेदः एकस्यैव शरीरस्यापचयो नामावयव-विभागावस्था उपचयस्त्वावयवान्तरसंयोगावस्थेत्यवस्थाद्वयानुगतत्वेन देहस्यैव य एवाहं शैशवे पितामहमनुभूतवानिति प्रत्यभिज्ञागोचरत्वसंभवात्। स एवाहं चैत्रपुत्रः स एवायं विप्र इति स्वपरप्रत्यभिज्ञादर्शनाच्च।

किञ्चैकस्य किं युगपदनेकदेहयोगः क्रमेण वा, नाद्यः अदर्शनादप्रयोजकत्वाद-संभवाच्च। द्वितीये पूर्वपूर्वनाशे सत्येवोत्तरोत्तरोदयो वाच्यः। तत्र किं प्रारब्धकर्मनाशः पूर्वनाशे कारणं समवाय्यसमवाय्यन्तरनाशो वा, नाद्यः तस्य यावज्जीवं सुखाद्यनु-भवोत्पादनाय देहारम्भकतया तत्पूर्वं तन्नाशायोगात्। द्वितीयह्यनुपलब्धिपराहतः।

न च बाल्यादिदेहसंस्थानभेदात्तदारम्भकावयवसंयोगभेदे पूर्वसंयोगध्वंसः कल्प्यः। सत्यपि पूर्वं संयोगेऽवयवान्तरसंयोगान्तरादेव संस्थानभेदोपपत्तः।

किञ्चोत्पत्तिरप्युत्तरदेहस्य प्रथमदेहे क्लृप्तहेतोरेव हेत्वन्तराद्वा, आद्ये-अनुपलम्भ-विरोधः, द्वितीयादिदेहे प्रथमदेहक्लृप्तपित्रादिव्यापारादर्शनात्। द्वितीयेऽपि विशिष्ट-पित्रादिजन्यत्वस्य ब्राह्मण्यादिप्रयोजकत्वात्, द्वितीयादिदेहे पित्रादिव्यापाराभावाद् ब्राह्मण्याद्यव्यवस्थापत्तौ तदधीनव्यवहारनियमो न स्यात्। न च बाल्याद्यवस्थापन्ना देहा इतरेतरं भिद्यन्ते भिन्नपरिमाणत्वान्मणिपिठरादिवदिति शङ्क्यम्।

एकस्मिन्नपि देहे मूले स्थूलोऽग्रे सूक्ष्म इतिवत्तत्तदवयवावच्छिन्ने युगपन्नाना-परिमाणदर्शनात्। एकजलौकादौ क्रमेण नानापरिमाणदर्शनाच्च। परिमाणभेदस्य द्रव्यभेदव्याप्यत्वाभावात्।

न च तत्रावयवपरिमाणानामेव नानात्वं नत्ववयविपरिमाणस्येति मन्तव्यम् । देहसामानाधिकरण्यानुभवविरोधात् ।

शिरःपाणिपादाङ्गुल्याद्यवच्छिन्नावयविन्येकविधपरिमाणान्तराननुभवात् । क्वचित्परिमाणेऽप्ययावद् द्रव्यभावित्वाव्याप्यवृत्तित्वयोः पार्थिवरूपादिविशेषवदुपपत्तेश्च ।

यस्त्वहं शैशवे पीनः पितामहमन्वभूवं स एव वार्धके कृशः प्रपौत्राननुभवामीति पीनत्वादि देहधर्मसामानाधिकरण्येनानुभूयते । अत एवारम्भवादे देहभेदे सत्यपि न प्रत्यभिज्ञानेनावस्थाद्वयानुगत एक आत्मा सिध्यति ।

य एवाहं पुष्टः स एव कृश इति देहेऽपि प्रत्यभिज्ञादर्शनात्, तथा सत्यपि भेदे आत्मनि प्रत्यभिज्ञेति शङ्कासमुन्मेषात् ।

य एवाहं स्वप्ने देवः स एव नर इति प्रतीतिस्तु यदेवरजतं सैव शुक्तिरितिवत्स्वाप्नदेहस्य मिथ्यात्वेन सर्वसंप्रतिपन्नतया वाधायां सामाधिकरण्यावगाहिनीतिशङ्का कलङ्किता न स्थायितया देहादात्मनि भेदनिर्णयोपयोगिनी ।

वहुत्वेन गृहीतानां देहेन्द्रियादीनामेकस्मिन्नात्मनि अभेदभ्रमोऽपि न विरुद्धः । रूपान्तरेण वैलक्षण्यग्रहस्य रूपान्तरेणाभेदभ्रमाविरोधादेव यथाऽधीयानानधीयानयोश्चैत्रमैत्रयोः समीपस्थे विष्णुमित्रेऽधीयानो मैत्र इति द्वयोरेकस्मिन्नभेदारोपः तथैकस्मिन्नात्मनि बहूनां देहादीनामभेदारोपोपपत्तेः ।

भेदकसाक्षात्कारश्च दोषविशेषे न भ्रमविरोधी, शङ्खत्वसाक्षात्कारेऽपि पीतिमभ्रमदर्शनात् । एवं जीवन्मुक्तानामपि प्रारब्धदोषविशेषात्संभावितो नरोऽमिति भ्रमः । पामराणामपि नास्तीति साहसमात्रम् । चार्वाकातिरिक्तानां सर्वेषामपि नैतस्य भ्रमत्वे विवादः ।

तथा च बहुषु प्रदेशेषु दृष्टाप्रामाण्यस्याहं प्रत्ययस्य कर्तृत्वाद्यंशेऽप्यप्रामाण्यज्ञानस्य न क्वाप्यवकाशः कल्प्यः । ततश्चागमानुसारेणाह कर्ताऽहं भोक्तेतिप्रत्यक्षस्य सौपाधिकत्वे सिद्धे तत्र मम मनः कामयते इति प्रत्यक्षसिद्धः कामः संकल्प्य इत्यादि श्रुतिसिद्धश्च मनोरूप उपाधिः संभवति । तत्सिद्धं श्रुतितदन्यप्रमाणविरोधे मानान्तरस्यान्यथानयनम् ।

कथं तर्हि सोमेन यजेतेत्यादिषु सोमादिपदानां लक्षणा उच्यते तात्पर्यविषये श्रुतेर्मानान्तरेण नान्यथाकरणं सोमेन यजेतेत्यत्र विशिष्टा भावनैव तात्पर्यविषयः तस्याः सोमयागसंसर्गघटितत्वात्तात्पर्याविषयीभूतोऽपि स प्रतीयते तथा च करणीभूतयोगेन समानपदोपात्तेनावरुद्धायां भावनायां पदान्तरोपात्तस्य सोमस्य पर्थक्येन करणतान्वयासंभवात् ।

यागभाव्यकभावनामध्याहृत्य आवर्त्य वा तस्यां सोमस्य करणतयाऽन्वयेन सोमेन यागं भावयेद् यागेन चेष्टं भावयेदिति वचनव्यक्तिकल्पने भावेनाध्याहारावृत्त्यादिदोषः प्रसज्यते ।

लोके इदं रजतमितिबोधस्योत्तरेण नेदं रजतं शुक्तिरेवेतिबोधेन बाध्रदर्शनात्। तथा चोत्तरेण श्रौतात्मबोधेन प्रत्यक्षप्रामाण्यबोधस्यैव बाधो भविष्यति। एतदर्थप्रपञ्चो वृक्षप्रकम्पनन्यायेन भविष्यतीत्युपरम्यते।

किञ्च व्यावहारिकत्वेन सावकाशस्य प्रामाण्यज्ञानस्य न सावकाशनिरवकाशन्यायविषयत्वम्। अस्तु वा निरवकाशत्वं तथापि पीनोऽहमित्यादिभ्रमेषु प्रामाण्यग्राहकस्येव कर्तृत्वादिबोधप्रामाण्यग्राहकस्यापि न क्वाप्यवकाशः कल्प्यः।

यथा हि विशेषशास्त्रोपदेशापर्यालोचनमूलस्य तद्विषयेऽपि सामान्यशास्त्रातिदेशाभ्यां जनितस्य बोधस्य न कोऽपि प्रवृत्तिसंवादि विषयः कल्प्यते, प्रातिभासिकत्वोपपत्तेः। तथा प्रकृतेऽपि यच्च पीनोऽहमित्यादि भ्रान्तिरसंप्रतिपन्नभेदस्य गृहीतत्वादिति तत्र मम देहो मम चक्षुरित्यादिरूपेण भेदग्रहो न पीनोऽहमित्यादिरूपस्याभेदग्रहस्य विरोधी, रूपान्तरेण भेदग्रहस्य रूपान्तरेणाभेदग्रहग्रहाविरोधित्वात्। चैत्रमैत्रयोः स्वरूपतो भेदेदन गृहीतयोरपि व्यत्यासेन भ्रान्तिगोचरत्वदर्शनात्।

किञ्चाय संवन्धग्रहो न साक्षाद् भेदग्रहः, स च पीनस्य देहो घटस्य स्वरूपमित्यभेदेऽपि दृश्यते इति कथं ततो भेदनिर्णयः। नचोभाभ्यां देहाभ्यां बाल्यवार्धकयोरेकत्वेन प्रत्यभिज्ञारूपाद् भेदकसाक्षात्कारादात्मनि भेदो गृह्यते इति युक्तिमत्, परिणामवादे ह्यवयवोपचयापचयाभ्यां न देहभेदः एकस्यैव शरीरस्यापचयो नामावयवविभागावस्था उपचयस्त्वावयवान्तरसंयोगावस्थेत्यवस्थाद्वयानुगतत्वेन देहस्यैव य एवाहं शैशवे पितामहमनुभूतवानिति प्रत्यभिज्ञागोचरत्वसंभवात्। स एवाहं चैत्रपुत्रः स एवायं विप्र इति स्वपरप्रत्यभिज्ञादर्शनाच्च।

किञ्चैकस्य किं युगपदनेकदेहयोगः क्रमेण वा, नाद्यः अदर्शनादप्रयोजकत्वादसंभवाच्च। द्वितीये पूर्वपूर्वनाशे सत्येवोत्तरोत्तरोदयो वाच्यः। तत्र किं प्रारब्धकर्मनाशः पूर्वनाशे कारणं समवाय्यसमवाय्यन्यतरनाशो वा, नाद्यः तस्य यावज्जीवं सुखाद्यनुभवोत्पादनाय देहारम्भकतया तत्पूर्वं तन्नाशायोगात्। द्वितीयस्त्वनुपलब्धिपराहतः।

न च बाल्यादिदेहसंस्थानभेदात्तदारम्भकावयवसंयोगभेदे पूर्वसंयोगध्वंसः कल्प्यः। सत्यपि पूर्वं संयोगेऽवयवान्तरसंयोगान्तरादेव संस्थानभेदोपपत्तेः।

किञ्चोत्पत्तिरप्युत्तरदेहस्य प्रथमदेहे क्लृप्तहेतोरेव हेत्वन्तराद्वा, आद्ये-अनुपलम्भविरोधः, द्वितीयादिदेहे प्रथमदेहक्लृप्तपित्रादिव्यापारादर्शनात्। द्वितीयेऽपि विशिष्टपित्रादिजन्यत्वस्य ब्राह्मण्यादिप्रयोजकत्वात्, द्वितीयादिदेहे पित्रादिव्यापाराभावाद् ब्राह्मण्याद्यव्यवस्थापत्तौ तदधीनव्यवहारनियमो न स्यात्। न च बाल्याद्यवस्थापन्ना देहा इतरेतरं भिद्यन्ते भिन्नपरिमाणत्वान्मणिपिठरादिवदिति शङ्क्यम्।

एकस्मिन्नपि देहे मूले स्थूलोऽग्रे सूक्ष्म इतिवत्तत्तदवयवावच्छिन्ने युगपन्नानापरिमाणदर्शनात्। एकजलौकादौ क्रमेण नानापरिमाणदर्शनाच्च। परिमाणभेदस्य द्रव्यभेदव्याप्यत्वाभावात्।

न च तत्रावयवपरिमाणानामेव नानात्वं नत्ववयविपरिमाणस्येति मन्तव्यम्। देहसामानाधिकरण्यानुभवविरोधात्।

शिरःपाणिपादाङ्गुल्याद्यवच्छिन्नावयविन्येकविधपरिमाणान्तराननुभवात्। क्वचित्परिमाणेऽप्ययावद् द्रव्यभावित्वाव्याप्यवृत्तित्वयोः पार्थिवरूपादिविशेषवदुपपत्तेश्च।

यस्त्वहं शैशवे पीनः पितामहमन्वभूवं स एव वार्धके कृशः प्रपौत्राननुभवामीति पीनत्वादि देहधर्मसामानाधिकरण्येनानुभूयते। अत एवारम्भवादे देहभेदे सत्यपि न प्रत्यभिज्ञानेनावस्थाद्वयानुगत एक आत्मा सिध्यति।

य एवाहं पुष्टः स एव कृश इति देहेऽपि प्रत्यभिज्ञादर्शनात्, तथा सत्यपि भेदे आत्मनि प्रत्यभिज्ञेति शङ्कासमुन्मेषात्।

य एवाहं स्वप्ने देवः स एव नर इति प्रतीतिस्तु यदेवरजतं सैव शुक्तिरितिवत्स्वाप्नदेहस्य मिथ्यात्वेन सर्वसंप्रतिपन्नतया बाधायां सामाधिकरण्यावगाहिनीतिशङ्का कलङ्किता न स्थायितया देहादात्मनि भेदनिर्णयोपयोगिनी।

बहुत्वेन गृहीतानां देहेन्द्रियादीनामेकस्मिन्नात्मनि अभेदभ्रमोऽपि न विरुद्धः। रूपान्तरेण वैलक्षण्यग्रहस्य रूपान्तरेणाभेदभ्रमाविरोधादेव यथाऽधीयानानधीयानयोश्चैत्रमैत्रयोः समीपस्थे विष्णुमित्रेऽधीयानो मैत्र इति द्वयोरेकस्मिन्नभेदारोपः तथैकस्मिन्नात्मनि बहूनां देहादीनामभेदारोपोपपत्तेः।

भेदकसाक्षात्कारश्च दोषविशेषे न भ्रमविरोधी, शङ्खत्वसाक्षात्कारेऽपि पीतिमभ्रमदर्शनात्। एवं जीवन्मुक्तानामपि प्रारब्धदोषविशेषात्संभावितो नरोऽमिति भ्रमः। पामराणामपि नास्तीति साहसमात्रम्। चार्वाकातिरिक्तानां सर्वेषामपि नैतस्य भ्रमत्वे विवादः।

तथा च बहुषु प्रदेशेषु दृष्टाप्रामाण्यस्याहं प्रत्ययस्य कर्तृत्वाद्यंशेऽप्यप्रामाण्यज्ञानस्य न क्वाप्यवकाशः कल्प्यः। ततश्चागमानुसारेणाहं कर्ताऽहं भोक्तेतिप्रत्यक्षस्य सोपाधिकत्वे सिद्धे तत्र मम मनः कामयते इति प्रत्यक्षसिद्धः कामः संकल्प्य इत्यादि श्रुतिसिद्धश्च मनोरूप उपाधिः संभवति। तत्सिद्धं श्रुतितदन्यप्रमाणविरोधे मानान्तरस्यान्यथानयनम्।

कथं तर्हि सोमेन यजेतेत्यादिषु सोमादिपदानां लक्षणा उच्यते तात्पर्यविषये श्रुतेर्मानान्तरेण नान्यथाकरणं सोमेन यजेतेत्यत्र विशिष्टा भावनैव तात्पर्यविषयः तस्याः सोमयागसंसर्गघटितत्वात्तात्पर्याविषयीभूतोऽपि स प्रतीयते तथा च करणीभूतयोगेन समानपदोपात्तेनावरुद्धायां भावनायां पदान्तरोपात्तस्य सोमस्य पर्यक्येन करणतान्वयासंभवात्।

यागभाव्यकभावनामध्याहृत्य आवर्त्त्य वा तस्यां सोमस्य करणतयाऽन्वयेन सोमेन यागं भावयेद् यागेन चेष्टं भावयेदिति वचनव्यक्तिकल्पने भावेनाध्याहारावृत्त्यादिदोषः प्रसज्यते।

सोमेन यागं भावयेदितिवाक्ये यागस्योद्देश्यत्वमनूद्यत्वं प्रधानत्वं चेति त्रिकं संपद्यते। यागेन स्वर्गं भावयेदितिवाक्ये तु यागस्योपादेयत्वं विधेयत्वं गुणत्वं चेति त्रिकमापद्यते इति विरुद्धत्रिकद्वयापत्तिश्च।

तत्र तावत्स्वर्गस्योद्देश्यत्वं नाम मानसापेक्षो विषयत्वाकारः। यजेरूपादेयत्वं त्वनुष्ठीयमानत्वाकारः।

तौ मनःशरीरोपाधिकौ धर्मौ अनुवाद्यत्वविधेयत्वे तु शब्दोपाधिके। ज्ञातस्योक्तिरनुवादः अज्ञानस्यानुष्ठेयत्वोक्तिर्विधिः। स्वर्गयागयोः साध्यसाधनत्वरूपतया प्रधानत्वोपसर्जनत्वे। पक्षान्तरे तु यागस्योद्देश्यत्वादि सोमस्योपादेयत्वादि च पर्यवस्यति।

यदि च वाक्यभेदपरिहाराय तत्प्रयोजकाध्याहारादितत्प्रयुक्तविरुद्धत्रिकद्वयापत्तिदोषपरिहाराय च यजिसामानाधिकरण्येनान्वयः स्वीक्रियते तदा तात्पर्याविषयीभूतस्याभेदस्य प्रत्यक्षबाधितत्वेन प्रत्यक्षसिद्धः साध्यसाधनभाव एव वाच्य इति मत्वर्थलक्षणा।

तथा हि न हि मत्वर्थलक्षणां विना सोमस्यान्वयः संभवति। यदि तावत्सोमयागयोरेकरूपेण भावनायां करणत्वेनान्वयः सोमेन यागेनेष्टं भावयेदित तदोभयविधाने वाक्यभेदः सोमस्य यागवत्फलभावनाकरणत्वेन प्राधान्यापाताद्यागार्थत्वानुपपत्तिश्च यागे द्रव्यानुपपत्तिश्चि प्रत्ययवाच्यफलभावनाया समानपदोपात्तयागेन करणाकाङ्क्षानिवृत्तत्वेन भिन्नपदोपात्तस्य सोमस्य करणत्वेनान्वयानुपपात्तिश्च स्यात्।

वैयधिकरण्येनान्वयेतु न तावद् यागेन सोममित्यन्वयः, समानपदोपात्तत्वात्, प्रत्ययवाच्यफलभावनायां करणत्वेनान्वितस्य यागस्य सोमकर्मकभावनान्वयानुपपत्तेः यागस्य सोमार्थत्वापत्तेश्च।

नचेष्टापत्तिः, अदृष्टद्वयापत्तेः। न हि यागस्य सोमार्थत्वं दृष्टद्वारेण संभवति, व्रीहिष्ववघातेनेव यागेन सोमे कस्यचिद् दृष्टस्यानुत्पादनात्। अतस्तेन सोमेन किञ्चिददृष्टं जननीयं प्रोक्षणेनेवव्रीहिषु, तथा यागस्य सोमार्थत्वे फलभावनायां सोमस्य करणत्वेनान्वयो वाच्यः, भावनाकरणत्वञ्च भावनाभाव्यनिर्वर्तकत्वेन भवति। न च सोमोवृषं विना फलं जनयितुमलम्, ग्रहैर्जुहोति इति वाक्यविहितहोमेन तस्य भस्मीभावात्।

अतोऽदृष्टद्वयापाताद्यत्र यागस्य सोमार्थत्वमिति न यागेन सोमं भावयेदित्यन्वयः संभवति, करणत्वेनोपस्थितस्य सोमस्य साध्यत्वेनान्वयानुपपत्तिश्च।

अथ सोमेन यागं भावयेदित्यन्वयः। तत्र यद्यपि सोमस्य यागार्थत्वाद् यागनिर्वृतिर्दृष्टमेव प्रयोजनमिति नादृष्टद्वयापत्तिः नापि करणतयोपस्थितस्य सोमस्य साध्यतयान्वयानुपपत्तिः करणतयाऽन्वयात्, तथापि भावनाकरणत्वेनान्वितस्य यागस्य साध्यत्वेनान्वयानुपपत्तिस्तदवस्थैव।

ननु यजेतेत्यत्र यागस्य न करणत्वेन साध्यत्वेन वोपस्थितिः, तद्वाचकतृतीयाद्यभावात्। किन्तु भावनायां यागस्य संबन्धमात्रं प्रतीयते। यागस्य भावनासम्बन्धः करणत्वेन साध्यत्वेन च संभवति, तत्र करणत्वांशमादाय फलसम्बन्धः साध्यत्वांशमादाय गुणसम्बन्धश्च स्यादिति चेन्न, यद्यपि भावनया यागस्य सम्बन्धमात्रं प्रतीयते तथापि करणत्वेनोपस्थितिदशायां न साध्यत्वम्। यागेन स्वर्गं भावयेदितिकरणत्वेनान्वये सति पश्चात् सोमेन यागं भावयेदिति साध्यत्वेनान्वयो वाच्यः। ततश्च पुनरागतः स एव दुरात्माऽध्याहारादिप्रयोज्यो विरुद्ध त्रिकद्वयापादको वाक्यभेदः। न च प्रत्ययाभिहितभावनायां स्वरूपमात्रमन्वेतीति वाच्यम्, कारकाणामेव क्रियान्वयात्। तत्सिद्धं सोमस्य न लक्षणां विना सामानाधिकरण्येन वैयधिकरण्येन वान्वयः संभवतीति।

न च यजेतेत्यत्र प्रत्ययोक्तभावनायाः करणाकाङ्क्षायां यागस्य करणत्वेनेवेतिकर्तव्यताकाङ्क्षायां सामस्येतिकर्तव्यतात्वेन भावनायामन्वयोऽस्तु कृतं मत्वर्थलक्षणयेतिशङ्क्यम्।

सोमेनेति तृतीया करणत्ववाचिन्यासोमस्येतिकर्तव्यतात्वानभिधानात्। तत्र यदीतिकर्तव्यतात्वं लक्षणया उच्येत ततो वरं सोमपद एव प्रकृतिभूते मत्वर्थलक्षणेति "गुणेत्वन्याय्यकल्पने"ति न्यात्।

अथ वेदो वा प्रायदर्शनादित्यधिकरणोक्तासंजातविरोधिन्यायेनान्त्ये प्रत्यय एव लक्षणेति चेन्न, तथापि सोमस्येतिकर्तव्यतात्वेनान्वयानुपपत्तिः सिद्धस्य वस्तुन इतिकर्तव्यतात्वाभावात्। क्रियाया एवेतिकर्तव्यतात्वात्, द्रव्यस्यकेवलमङ्गत्वात्।

अत एवेतिकर्तव्यतात्वाभावात् द्रव्यस्य प्रकरणादग्रहणम्। तदुक्तम्—

नावान्तरक्रियायोगादृते वाक्योपकल्पितात्।
गुणद्रव्ये कथंभावैर्गृह्णन्ति प्रहता क्रियाः॥ इति,

अपि च सोमेन यजेतेति हि यागास्योत्पत्तिवाक्यं नाधिकारवाक्यं, ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यस्याधिकारवाक्यत्वात्। उपत्तिवाक्ये च नेतिकर्तव्यताकाङ्क्षा, द्रव्यविशेषाकाङ्क्षाकलुषितत्वेनेतिकर्तव्यताकाङ्क्षाया विस्पष्टमनुत्थानात्।

तत्सिद्धं सोमस्य नेतिकर्तव्यतात्वेन भावनायामन्वयः। तस्माद्विशिष्टविधावन्वयानुपपत्त्या प्रत्यक्षविरोधेन तात्पर्याविषयीभूताभेदान्वयानुपपत्त्या चास्य मत्वर्थलक्षणा वाच्येति।

आदित्यो यूपः इत्यादौ च स्तुतिविशिष्टवाक्यार्थ एव तात्पर्यं न मुख्यसंसर्गे इति ...स्यापि प्रत्यक्षानुसारेण नयनम्। तत्त्वमस्यादिवाक्ये तु प्रत्यगभिन्नेऽतिविशेषे ब्रह्मण्येव तात्पर्यमिति तदर्थमेव जहदजहल्लक्षणाश्रयणं न तु प्रत्यक्षानुरोधाय।

ननु कृष्णपलं श्रपयेदित्यत्र प्रकृतितः प्राप्तस्य द्वारलोपान्निवर्तमानस्य पाकस्यैव प्रतिप्रसवविधिरिति तस्यैव तात्पर्यविषयता स्वरसतोऽवगम्यते। तत्र कथं प्रत्याक्षानुसारेणोष्णीकरणे लक्षणाङ्गीकारे तात्पर्यश्रुतेः प्राबल्यमिति नियमनिर्वाह इति चेच्छृणु—

तात्पर्यविषये श्रुतेः प्राबल्यमित्युत्सर्गः सत्वानर्थक्यप्रतिहतानां विपरीतं बलमिति न्यायेन प्रत्यक्षस्य क्वचिदत्यन्तागतिकत्वे परित्यज्यते। तत्र हि विक्लित्यभावः प्रकृतिसंवादीति न प्रातिभासिकः किन्तु व्यावहारिकः।

तत्र पाकोऽपि चेद् व्यावहारिकः कल्प्येत तदा समानसत्ताकयोर्विरोध इति प्रपञ्चतदभावन्यायेन सत्ताभेदं परिकल्प्य तात्त्विके पाकेऽङ्गीकृते अद्वैतावबोधकप्रबलानेकवाक्यविरोधः। तदुपगमेऽपि तदप्रत्यक्षत्वनिर्वाहाय तस्यावृतत्वेन व्यवहाराविषयत्वं वाच्यम्। तथा च तद्बोधने वाक्यवैयर्थ्यमपि स्यात्। प्रातिभासिकत्वे तु रज्जुसर्पादिवत्प्रत्यक्षः स्यादिति प्रत्यक्षस्यात्यन्तागतिकत्वपरिहाराय वाक्यवैयर्थ्यपरिहाराय चोष्णीकरणे लक्षणा।

तस्मात्प्रबलस्य प्रमाणस्य सति संभवे दुर्बलप्रमाणानुसारेणान्यथानयनायोगान्नाद्वैतबोधकत्वे काचिदनुपपत्तिरागमस्येति विषयसंभवेन तद्बोधद्वारा चिदानन्दघनब्रह्मात्मनावस्थानलक्षणमोक्षरूपप्रयोजनस्यापि संभवादारम्भवादारम्भणीयं शास्त्रम्।

यदपि स्वाध्यायाध्ययनविधिप्रयुक्तविचारस्य धर्ममीमांसाशास्त्रेणैव कृतत्वान्नेदं शास्त्रमारम्भणीयमित्युक्तं तत्र ब्रूमः—स्वाध्यायोऽध्येतव्य इति विधिर्न सर्वागममीमांसां प्रयुङ्क्ते। तथा हि स्वाध्यायविधिर्नियोगो वा स्याद्भावना वा किं वा इष्टसाधनत्वम्।

आद्ये धात्वर्थविषयको नियोगः तस्य च निर्नियोज्यत्वेन स्वविषयाननुष्ठापकत्वात् स्वनियोज्येनैवाध्यापनविधिना स्वविषयानुष्ठानसिद्धेर्नियोज्याकल्पनाच्च विचार विधायकता दूरत एव निरस्ता।

भावना वादेऽपि अध्ययनकरणिका भावना शब्दात्प्रतीयते तस्यां भाव्याकाङ्क्षायां समानाधिकरणपदोपात्तः स्वाध्यायो भाव्यत्वेनान्वेति नत्वन्यत्। दृष्टे सम्भवत्यदृष्टकल्पनायोगात्।

न च स्वाध्यायस्य सिद्धत्वेन भाव्यसंभवः तदवाप्तेरसम्भवेन भाव्यत्वोपपत्तेः। न च तस्याः स्वतो पुरुषार्थत्वादर्थज्ञानस्य चानुष्ठानोपयोगित्वात्तदेव भाव्यमस्तु, तस्य च मीमांसां विनाऽसंभवात्तस्यामपि स्वाध्यायविधेस्तात्पर्यमिति वाच्यम्, राजसूयवैश्यसोमबोधकवाक्यानां विप्रेणानध्यनापत्तेः।

याजनार्थबोधोपयोगितयाऽध्ययनमिति चेत्तथापि क्षत्रियवैश्याभ्यां बृहस्पतिःसवबोधकवाक्यानामनध्ययनापत्तिर्दुर्वारा। ब्रह्मयज्ञजपाद्यर्थं तदध्ययनमिति चेत्तर्हि सर्वस्यैवागमस्त तथाऽध्ययनमस्तु कृतमर्थबोधकल्पनेनेति।

अपि च हुं फडादिशब्दाध्ययनस्यार्थज्ञानपर्यन्तत्वाभावादवश्यमक्षरग्रहणमेव स्वाधीनोच्चारणक्षमत्वलक्षणं फलं वाच्यं तथा च वैरूप्यपरिहाराय सर्वत्र तदेवास्तु। अर्थज्ञानं तु तस्य फलं न तु विधेः।

अतः कथं तदुभयभिन्नो विचारोऽध्ययनविधिविधेयः स्यात् अवघाते आवृत्तिवद्भविष्यतीति चेन्न, तत्र विहितस्यैव धात्वर्थस्य दृष्टवैतुष्यफलानुपपत्त्याऽऽवृत्तिकल्पनात्। इह तु अक्षरग्रहणेनैव दृष्टफलेनोपपत्तौ कल्पनिचारविध्यनुपपत्तेः।

नन्वर्थवोधस्य विधिफलत्वाभावे तत्र वेदतात्पर्यं न स्यात् तथा च न तस्य प्रामाण्यलाभ इति चेन्न, नद्यास्तीरे पञ्चफलानि सन्ति इति वाक्यस्य विध्यभावेऽपि ज्ञाने तात्पर्यदर्शनात्।

तस्मान्नाध्ययन विधिप्रयुक्तो विचारः किन्तूत्तरक्रतुविधिप्रयुक्त इति तद्वद्ब्रह्मविचारोऽपि श्रवणादिविधिप्रयुक्त एव स्यादिति न काचिदनुपपत्तिः।

इष्टसाधनताविधिपक्षेऽपि कस्येष्टस्य साधनमध्ययनमित्याकाङ्क्षायामक्षरावाप्तेरेवाकाङ्क्षा पूरकत्वे संभवति नान्यफलकल्पनावकाश इत्युत्तरक्रतुविधिप्रयुक्तत्वादर्थज्ञानस्य तत्प्रयुक्त एव विचारः।

अस्तु वाऽध्ययनविधिप्रयुक्तस्तथाप्युत्तरकाण्डरूपोपनिषद्भागस्य न प्राच्या मीमांसया गतार्थत्वं तत्र कर्मोपयोगिनः पूर्वकाण्डस्यैव विचारितत्वात्। न चैकवाक्यत्वं विरुद्धार्थप्रतिपादकत्वेन तदयोगात्। अर्थाविरोधे सत्येव ह्येकवाक्यत्वम्।

नन्वेवं परस्परविप्रतिपत्तौ विनिगमनाविरहेण काण्डद्वयस्याप्यप्रामाण्यं प्रसज्येतेति चेन्न, पूर्वकाण्डस्य व्यावहारिकप्रामाण्यात्, उत्तरकाण्डस्य पारमार्थिकवस्तुप्रतिपादकत्वेन तत्त्वावेदकत्वलक्षणप्रामाण्यस्वीकारात्।

अपि च ब्रह्मबोधप्रतिबन्धकदुरितनिकरनिवर्तककर्मकदम्बबोधकपूर्वकाण्डेन सह ब्रह्मबोधकोत्तरकाण्डस्य मुक्तिफलकस्यैकवाक्यत्वे संभवति विरोधं परिकल्प्याप्रामाण्यकल्पनं नोचितम्।

न च कर्मकाण्डापेक्षितदेहाद्यतिरिक्तकर्तृस्तावकतयोपनिषदामुपयोगः किन्न स्यादिति मन्तव्यम्। एवं हि स्तुतौ लक्षणा प्रसज्येत। न च मुख्यार्थे बाधकाभावे सा युक्ता, देहातिरिक्तमात्मानमवगतवतः स्वर्गादिकामस्य स्तुतिं विनाऽपि कर्मणि प्रवृत्तिसंभवात्। श्रुत्यन्तजन्यब्रह्मबोधस्य प्रवृत्त्यनुपयोगित्वाच्च। प्रत्युतापेतब्रह्मक्षत्रादिभावाकर्तृभोक्तृनित्यशुद्धबुद्धमुक्तस्वभावनिरतिशयानंन्दरूपविज्ञानघनप्रत्यभिन्नब्रह्मबुद्धेः-कर्तृत्वादिबुद्धिचुपमर्दकस्वभावत्वेन प्रवृत्तिपरिपन्थित्वाच्च। तस्मादगतार्थमिदं बादरायणीयं तन्त्रमित्यवश्यमारम्भणीयम्।

यद्यप्यग्रे वक्ष्यमाण एवायं सर्वोऽप्यर्थस्तथापि शास्त्रारम्भोपयोगित्वेनेह संक्षेपेणोपन्यस्त इति न पुनरुक्तिदोषः सम्भावनीयः तथापि शास्त्रविचारणेनैवविद्यानिवर्तनक्षमा प्रतिबद्धसाक्षात्कारोदयसंभवात्किं प्रकरणैरिति चेन्न।

नूतनतार्किकोत्थापितकुतर्कनिराकरणेन अतिगम्भीरतया मन्दानवगाह्यभाष्यकाराद्युक्तितात्पर्यवर्णनेन च तेषां सार्थकत्वात्।

एतस्य तु प्रकरणान्तरैस्तुल्यावान्तरविषयादिमत्त्वेऽपि सर्वशास्त्रेतिहासपुराणसाहित्यव्याकरणकाव्यनाटकाख्यायिकादिषु वर्तमानदुरवगाह्यलौकिकन्यायनिचयार्थविषयाद्युद्घाटनेन सर्वशास्त्राद्युपकारित्वादवश्यमारम्भणीयत्वम्। एतेनान्येषु बहुपु-प्रकरणेषु सत्सु किमनेनेति निरस्तम्।

परमविषयादयो यद्यपि प्रकरणानामपि शास्त्रीया एव तथापि प्रकरणत्वादेवावान्तरविषयादयो भवन्त्येव। तथा हि सारं जिघृक्षुरवान्तराधिकरी सगुणनिर्गुणरूपविषयभेदं परित्यज्य निर्गुणसारमात्रमिह विषयः। एवञ्च शास्त्रैकदेशसम्बद्धमिति लक्षणांशेन संगृहीतः।

तन्मात्रावधारणमतिगूढशास्त्रतात्पर्योद्घाटनं नवीनतार्किकोद्भावितशास्त्रतात्पर्यपरिपन्थि कुतर्कनिराकरणञ्चावान्तरप्रयोजनम्।

इति लौकिकन्यायरत्नाकरे शास्त्रविषयादिकथनपुरस्सरं शास्त्रप्रकरणसामान्ये-तत्प्रकणानामारम्भसमर्थनम्।

अथाऽत्र व्याख्येयानां न्यायानां व्याख्यानमारभ्यते। तत्र तावन्न्यायपञ्चके प्रायस्त्वं येन सिंहावलोकनन्यायेन च पूर्वोक्तार्थदृढीकरणाय तत्परिपन्थिपक्षान्तरनिरासाय चोत्तरग्रन्थप्रवृत्तिः। यत्रातिसूक्ष्मदुर्विज्ञेयवस्तुविज्ञाय विषयक्रमेण तत्समीपं समीपतरं समीपतमं च वस्तु शास्त्रेण तथोच्यते।

तत्र स्थूलारुन्धतीन्यायोऽवतरति। अयमेव केनचिदरुन्धती प्रदर्शनन्यायत्वेनोदाह्रियते। यथाहि ध्रुवमरुन्धतीञ्च दर्शयतीतिविधिबलादवरध्वोररुन्धतीदर्शने प्राप्ते सूक्ष्मतमायास्तस्याः झटिति दर्शयितुमशक्यतयाऽरुन्धतीं पश्यतामित्युक्ते चन्द्राद्यपेक्षयाऽरुन्धत्या अतिदूरं भूतलस्थमेव किञ्चिदरुन्धतीत्वेन पश्यतामित्यङ्गुलिनिर्देशेन तावच्चन्द्रमरुन्धतीत्वेन वदन्ति। ततश्चन्द्रेतरास्तत्समीपस्थास्तारकाभिन्नाः सप्तर्षिसंज्ञकाः समीपतराः। ततस्तन्मध्यवर्तिनीं वसिष्ठरूपां समीपतमां तारकामरुन्धतीयमित्युक्त्वा तत्पार्श्ववर्तिनीमरुन्धतीमेवारुन्धतीत्वेन बोधयन्तीति तद्वद्धनगृहारामादीनात्मानमिव मन्यमानोऽतिप्राकृतो जनस्तेषु नष्टेषु नष्टोऽहमिति क्रोशन् दृश्यते, तं वारयन्ती "आत्मा वै जायते पुत्रः" इति श्रुतिस्तावत्पुत्रमात्मत्वेन वदति।

धनाद्यपेक्षया पुत्रस्यात्मसमीपत्वमङ्गादङ्गात्संभवसि, हृदयादधिजायसे, आत्मा वै पुत्रनामासीति वचनसिद्धम्। दृश्यन्ते च सर्वस्वदानेनापि पुत्रजीवनादिकमिच्छन्तः।

ततोऽस्य धीः पुत्रात्मत्व एव मा पर्यवस्यत्विति "स वा एष पुरुषोऽन्तरः समये" इत्यादि श्रुतिः स्थूलदेह आत्मा इति वदति। देहश्च पुत्रादन्तरः। अतः पुत्रादधिका प्रीतिस्तादात्म्याध्यासकृतोऽहंभावश्च दृढस्तत्र दृश्यते। इतरथा दह्यमाने गृहादौ हन्तृषु चोपस्थितेषु पुत्रं परित्यज्य स्वस्य पलायनं न स्यात्।

ततो देहमेवात्मानं न जानीयादिति तात्पर्यवती श्रुतिस्तेह प्राणाः प्रजापतिं समेत्य ब्रूयुरित्यादिना श्रोत्रादीनां चेतनत्वं सूचयन्ती तदविनाभूतमात्मत्वं सूचयति। ततस्तेष्वप्यात्मत्वबुद्धिवारणायान्योऽन्तरात्मा प्राणमय इत्यादिना प्राणात्मत्वं वदति।

ननु यथा देहात्मत्वे कृतहानिरकृताभ्यागमश्च भवति, यथा च पूर्वजन्मानुभवजन्यसंस्काराभावादस्मिन् जन्मनि स्तनपानादौ प्रवृत्त्यनुपपत्तिरापद्यते, न तथेन्द्रियाणामात्मत्वाङ्गीकारे तेषां देहान्तरसञ्चारसंभवात्, तथा च तेषामात्मत्वं श्रुत्या किमर्थं निषिध्यते इति चेदसंभवादिति गृहाण। यथा हि—न तावदेकस्मिन् देहे सर्वेषामिन्द्रियाणां समुदायस्यात्मत्वं संभवति, तेष्वेकस्य द्वयोर्वा नाशे देहस्य निरात्मत्वेन निश्चेष्टत्वापत्तेः। न च सम्भूयेन्द्रियाणि कार्यं कुर्वन्ति दृश्यन्ते तेषां प्रतिनियतासाधारणविषयभेदस्यान्वयव्यतिरेकसिद्धत्वात् एकस्य कस्यचिदात्मत्वं तु विनिगमनाविरहेण वक्तुमशक्यं तदङ्गीकारेऽपि तदपाये पूर्वदोषः प्रसज्यते। प्रत्येकं भोक्तृणीति चेत्तेषां प्रत्येकं स्वातन्त्र्यमस्ति न वा, आद्ये तेषामैकमत्यासंभवात्। विरुद्धदिक्क्रियैस्तैरधिष्ठितो देहः सद्यो विदीर्येत नोपपद्येत चैकोऽहमित्येकत्वप्रत्ययोऽपि, योऽहं घटमद्राक्षं स एवाहं तं स्पृशामीति च।

द्वितीये यदधीनत्वं तेषां तस्यैवात्मत्वं युक्तं, स्वामिभृत्यभावस्य देहभेदव्याप्यत्वदर्शनेन तदैक्ये स्वामिभृत्यन्यायस्याप्रवृत्तेः।

नन्वहमेक इति प्रतीतिरेकदेहावच्छेदकृता, तरुष्विवैकदेशावच्छेदकृतारण्यैकधीः। न च बहूनामनैकमत्येन विरुद्धदिक्क्रियया बहुवृकादृष्टमृगन्यायेन बहुराजकपुरन्यायेन वा देहोन्मथनप्रसङ्गः। वरगोष्ठीन्यायेनैकमत्योपपत्तेः।

योऽहं घटमद्राक्षं स एवाहं तं स्पृशामीति नेत्रत्वचोरैक्याभिमानोऽपि यन्मत्सुहृदा शिवदत्तेन कृतं तन्मयैवकृतमितिवदैकमत्यातिशयादुपपद्यत एव। अत एव चक्षुरादिष्वन्यतमविलोपेऽपि न चेष्टाद्यनुपपत्तिः। पारिषदेष्वेकस्मिन् मृतेऽप्यवशिष्टैरेव परिषत्कार्यनिर्वाहन्यायेन तन्निर्वाहात्।

इन्द्रियसंघात एव वात्मा, तन्तुसंघात इव पटः। तत्र कस्यचिदिन्द्रियस्यापगमेऽवशिष्टस्येन्द्रियगणस्य अन्यत्वेऽपि किञ्चित्तन्तुनाशेऽपि अवशिष्टतन्तुवृन्दे स एवायं पट इतिवदत्यन्तसाम्यात्प्रत्यभिज्ञा न विरुध्यते। ज्ञानान्वयव्यतिरेकादप्येषामात्मत्वमिति चेन्मैवं ज्ञानान्वयव्यतिरेकौ हि करणत्वेनाप्युपपद्येते एव। तेषां कर्तृत्वाङ्गीकारे तु करणा-

भावप्रसङ्गः। अहमिन्द्रियाणि न भवामि तज्ज्ञातृत्वात्, यो यज्ज्ञाता स तद्भिन्नः यथा घटाद् घटज्ञाता इत्यनुमानञ्चेन्द्रियानात्मत्वे प्रमाणम्। नचात्राप्रयोजकत्वं शङ्क्यम्, ज्ञातृज्ञेयभावानुपपत्तिलक्षणस्य तर्कस्य विपक्षे बाधकत्वात्। तथा च पश्यामि स्पृशामीत्याद्यनुभूतीनां चक्षुषा पश्यामि त्वचा स्पृशामीत्येवं चक्षुरादीनां करणत्वानुभूत्यनुरोधेन चक्षुरादिकरणकचाक्षुषादिबोधाधारगोचरतयाऽन्यथासिद्धत्वात्। तदनुरोधेन बहूनामिन्द्रियाणामात्मत्वं तेषां चैकमत्यं बहुषु अहमेक इत्येकत्वबुद्धेः द्रष्टुः स्प्रष्टुः प्रत्यभिज्ञानस्य चौपचारिकत्वमित्यनेकाप्रामाणिककल्पनस्यान्याय्यत्वात्, बहुष्वैकमत्यस्य कदाचित्सत्त्वेऽपि सदाऽसंभवात्, वरगोष्ठीन्यायस्य स्वामिभृत्यन्यायेन तुल्ययोगक्षेमत्वाच्च।

यच्चेन्द्रियवृन्दस्यात्मत्वं प्रकल्प्य तत्रैकैकेन्द्रियध्वंसे वृन्दस्यान्यत्वेऽप्येकैकतन्तुध्वंसेऽपि स एवायं पट इतिवत्प्रत्यभिज्ञाऽत्यन्तसादृश्यादिति तन्न उत्तरवृन्दस्य पूर्ववृन्दाद्भिन्नतया भिन्नकालतया च पूर्ववृन्देनानुभूतस्योत्तरवृन्देनास्मरणापत्तेः। नान्यदृष्टं स्मरत्यन्यः इति न्यायात्। अन्योन्यवार्ताऽनभिज्ञत्वेन तदुभयसाम्यज्ञानासंभवात्। पूर्वोत्तरपटयोः साम्यज्ञातुरिवात्रसमुदायसाम्यज्ञातुस्तदन्यत्वापत्तेश्च।

तस्माद् युक्ता श्रुत्या तेषु आत्मत्वबुद्धिपर्यवसाननिरासाय प्राणस्यात्मत्वोक्तिः। तस्मिन्नप्यात्मत्वधियः पर्यवसानवारणाय अन्योऽन्तरात्मा मनोमयइति वदति। प्राणस्यापि ज्ञेयत्वेन वायुत्वेन च बाह्यवायुवज्जडत्वनिश्चयात्। मम प्राण इति गवाश्वादिवन्ममतास्पदत्वेनानात्मत्वनिर्धारणाच्चात्मत्वनिराकरणं युक्तम्। श्रुताविन्द्रियप्राणादिशब्दास्तत्तद्देवतापराइति स्पष्टमाकरदृशाम्। तथा च तेषां संवादश्रवणान्यथाऽनुपपत्त्याऽपि न चेतनत्वं शक्यं प्रतिपादयितुम्। मनस्यप्यात्मत्वमतेः पर्यवसानं मा भवत्विति अन्योऽन्तरात्मा विज्ञानमय इति वदति।

तस्याप्यात्मत्वनिराकरणाय अन्योऽन्तरात्मा आनन्दमय इत्याह। तत्राप्यात्मत्वबुद्धिपर्यवसानं मास्त्विति पुत्राद्यानन्दमयान्तानामनात्मत्वं दर्शयन्ती श्रुतिर्निर्विशेषात्मतत्त्वमेवात्मत्वेन बोधयति।

तथा हि—कश्चिद् धीरः प्रत्यगात्मानमैक्षत अस्थूलमनल्पमह्रस्वमदीर्घमचक्षुरश्रोत्रं तदपाणिपादम्, अप्राणो ह्यमनः शुभ्रः अनन्तश्चात्मा विश्वरूपोऽह्यकर्ता, न चास्ति वेत्ता मम चित्सदाऽहं चिन्मात्रोऽहं सदा शिवः, एष ते आत्मान्तर्याम्यमृतः एष ते आत्मा सर्वान्तरः, अशरीरं शरीरेषु प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो ये मनो विदुः, केन प्राणः प्रथमः प्रैतियुक्तः, यतो वाचो निवर्तन्ते अप्राप्य मनसा सह, न करोति न लिप्यते, साक्षी चेता केवलो निर्गुणश्च, कृत्स्नप्रज्ञानघन एवेत्याद्याः श्रुतयोऽनादिभवानुवर्तमानचार्वाकादिभ्रमसिद्धस्य प्रकृतन्यायेन निष्प्रपञ्चाद्वैततत्त्वे मुमुक्षुधीनिवेशाय पूर्वोक्तश्रुत्याभासानुदितस्य पुत्राद्यात्मत्वस्य बाधपूर्वकमात्मतत्त्वं प्रतिपादयन्ति।

तत्र प्रत्यक् श्रुत्या पुत्रात्मत्वबाधः। प्रत्यक्त्वं हि सर्वान्तरत्वम्। अस्थूलश्रुत्या देहात्मत्वबाधः। अचक्षुरित्यादिनेन्द्रियात्मत्वबाधः। अप्राणोऽमना इत्याभ्यां प्राणमनसोरात्मत्वबाधः। अकर्तेति विज्ञानात्मत्वबाधः। विदित्यानन्दमयात्मत्वबाधः। शुभ्रोऽनन्तश्चिन्मात्रोऽहं सदा शिव इत्याद्यास्तु सर्वं बाधावधिभूतनिर्विशेषाद्वैतवस्तुनः आत्मत्वं बोधयन्ति।

किञ्च पुत्रात्मत्वश्रुतेर्गौणत्वं स्पष्टमेव, भेदस्यानुभवसिद्धत्वात्। ते ह प्राणाः प्रजापतिमित्यादिश्रुतिरर्थवादत्वान्न स्वार्थपरा। अन्नमयाद्यानन्दमयान्तश्रुतेर्मुञ्जादिषीकोद्धरणन्यायेन सर्वान्तरब्रह्मशब्दार्थसर्वबाधावधिभूतात्मतत्त्वप्रतित्त्युपायार्थत्वेनोपन्यस्तत्वान्न तस्याः स्वार्थपरत्वम्।

प्रत्यगात्मत्वादिश्रुतीनां तु वक्ष्यमाणोपक्रमादिलिङ्गैरात्मयाथात्म्यपरत्वमितियुक्तं प्राबल्यम्। प्रयोगश्च—पुत्राद्यानन्दमयान्तं जगदनात्मा दृश्यत्वाद् घटवदिति। न चात्मनोऽपि दृश्यत्वं. चैतन्यभास्यत्वं हि तत्।

तथा च कर्मकर्तृविरोधः। कर्तृत्वं हि क्रियां प्रति गुणत्वं कर्मत्वं तु प्राधान्यं तथा चैकस्यां क्रियायामेकस्यात्मनो युगपद्विरुद्धधर्माधारत्वे वैरूप्यप्रसङ्गः। नापि ज्ञानाश्रयतयाऽऽत्मावभासः संभवति। ज्ञानेतरस्य ज्ञानकर्मत्वेनैवापरोक्षत्वनियमात्। नापि नित्यानुमेयोऽसन्दिग्धत्वात्। नह्यहमस्मि न वेति सन्देहः कस्यचित् कदाचिदपि भवति।

अतः परिशेषादवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वलक्षणं स्वयं प्रकाशत्वमेवात्मनः। इति न तस्य चैतन्यभास्यत्वम्। आत्मा स्वेतरचैतन्यभास्यः पदार्थत्वात् पटवत् इत्याद्यनुमानन्तु न विज्ञातेर्विज्ञातारं विजानीयाः विज्ञातारमरे केन विजानीयात् अन्यस्मादेवविदितादथो विदितादधीतिः। अत्रायं पुरुषः स्वयंज्योतिर्भवति आत्मैवास्य ज्योतिः अप्राप्यमनसा सह यन्मनसा न मनुते" इत्याद्यात्मस्वप्रकाशत्वप्रतिपादकश्रुति बाधितं ज्ञानेनैकान्तिकञ्च।

ज्ञानमपि वेद्यमेवेति चेत् तर्हि किं स्ववेद्यं परवेद्यं वा? आद्ये आत्माश्रयः द्वितीये परमपि अवेद्यं वा? आद्ये प्रथमस्यापि तथात्वप्रसङ्गः ज्ञानत्वसाम्यात्। द्वितीये स्ववेद्यत्वे आत्माश्रयोऽपि। परवेद्यत्वेऽपि प्रथमेन वेद्यत्वाङ्गीकारे परस्पराश्रयः। परेण वेद्यत्वमुपेयं तत्रापि द्वितीयवेद्यत्वेनान्योन्याश्रयः पूर्ववेद्यत्वे चक्रकापत्तिः। द्वयव्यवधानेन स्वस्यापेक्षणात्। तृतीय वेद्यत्वाश्रयणे तु तस्याप्यन्यवेद्यत्वं तस्याप्यन्यवेद्यत्वमित्यनवस्था।

भवतु को दोषो मूलक्षयाभावादिति चेन्न; यदेव हि न ज्ञायते तदेव कूर्मलोमवदसत्संपद्यते। एवं तद्वेद्यं तद्वेद्यमपीति सर्वेषां गड्डलिकाप्रवाहन्यायेनाप्रामाणिकत्वप्रयुक्तासत्त्वलक्षणान्धकूपपतनं स्यात्, ततश्च कथं न मूलक्षय प्रयुक्तोजगदान्ध्य प्रसङ्गलक्षणो दोषः। तस्मादात्मवेद्यत्वानुमानं ज्ञानेनैकान्तिकमिति सिद्धम्।

नन्वयमात्मा न तावदणुपरिमाणः संभवति। सर्वाङ्गीण शैत्याद्यनुपलम्भप्रसङ्गात्। नापि मध्यमपरिमाणस्य सावयवत्वनियमेनानित्यत्वापत्त्या कृताभ्यागमकृतविप्रणाशप्रसङ्गात्। एवञ्चात्मा कार्त्स्न्यमिति न्यायनिरस्तत्वाच्च। नापि परममहत्परिमाणः उत्क्रान्तिगत्यागतिश्रुतिविरोधात्।

अतः किं परिमाणोऽयमात्मेति चेच्छृणुस्वतस्तावन्नित्यशुद्धबुद्धमुक्तस्वभावाखण्डानन्तब्रह्मस्वरूपत्वात्स वा एष महानज आत्मेत्यादि श्रुतेश्च परममहत्परिमाण एव।

ब्रह्मस्वरूपत्वन्चास्य "तत्सृष्ट्वा तदेवानुप्राविशत्, स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत स एष इह प्रविष्ट आनखाग्रेभ्यः, अनेन जीवनात्मनाऽनुप्रविश्य सर्वाणि रूपाणि विचिन्त्य धीरो नामानि कृत्वाऽभिवदन्यदास्ते, एको देवो बहुधासन्निविष्टः, यथाह्ययं ज्योतिरात्मा विवस्वान् यो भिन्नो बहुधा एको गच्छन्नुपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः पुरः स पक्षी भूत्वा पुरुष आविशत्, अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूवेत्यादि प्रवेशश्रुतिभ्यः।

सत्यज्ञानात्मकोऽनन्तो विभुरात्मा महेश्वरः।
तस्यैवांशो जीवलोके हृदये प्राणिनां स्थितः॥
विस्फुलिङ्गा यथा वह्नेर्जायन्ते काष्ठयोगतः।
अनादिकर्मसम्बद्धास्तद्वदंशा महेशतः॥
अनादिवासनायुक्तास्ते क्षेत्रज्ञा इति स्मृताः।
सुख्यहं दुःख्यहं चेति जीव एवाभिमन्यते॥
निर्लेपोऽपि परं ज्योतिर्मोहितः शम्भुमायया।
चतुर्विधेषु भूतेषु जीवत्वेन वसाम्यहम्॥
सूक्ष्मो भूत्वाऽथ हृद्देशे यत्तत्सूक्ष्मः प्रकीर्तितः।
बालाग्रमात्रं हृदयस्य मध्ये विश्वं देवं जातवेदं वरेण्यम्।
मामात्मस्थं ये नु पश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम्॥
योनिं योनिमधितिष्ठामि चैकः।
क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत।
अहमात्मा गुडाकेश सर्वभूताशयस्थितः।
ममैवांशो जीवलोके जीवभूतः सनातनः।

इत्यादि स्मृतिभ्यश्च संसारित्वावस्थायामेव तस्योपाधिर्निबन्धनमल्पपरिमाणं तच्चोपाध्यनुरूपत्वादनियतम्।

अङ्गुष्ठमात्रो रवितुल्यरूपः आराग्रमात्रो ह्यवरोऽपि दृष्टः।
वालाग्रशतभागस्य शतधा कल्पितस्य च।
भागोजीवः स विज्ञेयः स चानन्त्याय कल्पते॥
नैव स्त्री न पुमानेष नैव चायं नपुंसकः।
यद्यच्छरीरमादत्ते तेन तेन स युज्यते॥

इत्यादि श्रुतिभ्यः तस्माद् देहेन्द्रियप्राणमनोबुद्धचविद्येतरस्तत्साक्षी चिद्धातुः प्रत्यगात्मा वेदान्तैः प्रकृतन्यायेन वोध्यते इति सिद्धम्।

पञ्चकोशावतरणन्यायस्तु श्रुतिसिद्धत्वाल्लोकाप्रसिद्धत्वाच्च न लौकिक एतत्तुल्य विषयप्रयोजनश्च। तथा हि ये स्थूलदेहादयः प्रागुदाहृतश्रुतिष्वन्नमयादिशब्दैरभिहितास्त एवौपनिषदैः कोशशब्देन व्यवह्रियन्ते। कोशा यथा कोशकारक्रमेरावरकतया क्लेशहेतुरेवमन्नमयादयोऽप्यद्वयानन्दावरकतयात्मनो दुःखहेतुत्वात् कोशा इत्युच्यन्ते। तदुक्तमभियुक्तैः—

अन्नं प्राणो मनो बुद्धिरानन्दश्चेति पञ्चकोशास्तैरावृतः स्वात्मा विस्मृत्या संसृतिं व्रजेदिति। तत्र पञ्चीकृतेभ्यः स्थूलभूतेभ्य उत्पन्नः स्थूलदेहोऽन्नमयकोशः। पञ्चीकरणन्तु अचिन्त्यशक्तिः परमेश्वरः शब्दादितन्मात्रीमात्रं सूक्ष्मं व्योमादिकमेकैकं द्विधाद्विधा विधाय तेषु दशसु भागेषु प्राथमिकान् पञ्च भागान् प्रत्येकं चतुर्धा विधाय तेषां चतुर्णां भागानां स्वस्वद्वितीयभागेतरेषु स्थूलभागेषु योजयति। एवञ्च सति ते प्रत्येकं पञ्चपञ्चात्मका भवन्तीति तदप्युक्तं द्विधा विधाय चैकैकं चतुर्धा। प्रथमं पुनः स्वस्वेतरद्वितीयांशैर्योजनात् पञ्च पञ्च ते इति। तेषु वियदादिव्यवहारस्तु मल्लग्रामन्यायेन स्वस्वांशाधिक्यादिति वोध्यम्। तदुक्तं भगवता सूत्रकारेण वैशेष्यात्तु तद्वादस्तद्वाद इति।

ननु पुराणोक्तं तारतम्यं दशांशैर्भूतपञ्चक इत्यभियुक्योक्तेस्तन्मूलभूतेभ्यो दशोत्तरमप्येकमण्डावरणसप्तकमित्यादि पुराणादिवचनेभ्यश्चाकाशादिदशमांशसाम्यं वाय्वादेरिति गम्यते। आकाशादिषु पञ्चस्वेकैकं द्विधा समं विभज्य दशसु भागेषु प्राथमिकान् पञ्च भागान् प्रत्येकं चतुर्धा समं विभज्येति साम्प्रदायिकोक्तेश्चाकाशादेरेकैकस्याष्टमोऽष्टमांशः स्वस्वार्धांशेतरार्धेषु संयोज्यत इति गम्यते।

तथा चाकाशाष्टमांशस्यापि वाय्वादिसर्वांशापेक्षयाऽप्याधिक्यात्सर्वत्राकाशव्यवहार तव स्यादिति। उच्यते, न्यूनाधिकभावो हि ब्रह्माण्डगोलकोपर्यधस्तादावेष्टनभूतेषु भूतेष्वेव न तु तदन्तर्वर्तमानेषु तस्यानुपलम्भात्। यथाहुः ब्रह्माण्डावरणेष्वेशा न्यूनाधिकविचारणेति। तदुदाहृतकूर्मपुराणवचनेऽप्ययमेवार्थः प्रतीयते। स्पष्टीकृतं चैतल्लिङ्गे—

"अण्डं दशगुणेनैव वारिणा चावृतं बहिः" इत्यादिना। एवमन्येष्वपि पुराणादिषु तानि च ब्रह्माण्डावरणभूतानि भूतान्यपञ्चीकृतान्येवेति वासिष्ठे प्रथितम्। वायु-

पुराणे च सत्यलोकात्तांल्लोकान् प्रस्तुत्य एते संवृता लोकाश्छत्राकारा व्यवस्थिताः स्वकैरावणैः सूक्ष्मैर्धार्यमाणाः पृथक् दशभागाधिकाभिश्च ताभिः प्रकृतिभिर्बहिरित्युक्तम् ।

तथा च ब्रह्माण्डान्तर्वर्तिचतुर्दशभुवनतत्तस्थभोग्यभोगायतनोपादानंभूतान्येव तु भूतानि जीवोपभोगयोग्यत्वाय पञ्चीकृतानि । तानि च यथा यथा स्वांशाधिक्यात्तत्तद्व्यवहारयोग्यानि भवन्ति । तथा तथैवांशीकृत्य मेलितानीति गम्यते ।

यत्तु क्वचित्प्रकरणे समं विभज्येति पाठो दृश्यते तत्र सममितिपदं संघातायायातम् । अथवा समं तत्तदंशाधिक्यात्तत्तद्व्यवहाराय तत्तत्स्थूलांशमेलनयोग्यं यथा यथा स्यात्तथा तथा विभज्येति समर्थनीयम् । एवं हि पञ्चीकरणानन्तरं व्योम्नि शब्दः स्फुटतयाऽभिव्यज्यते, वायौ शब्दस्पर्शौ, तेजसि शब्दस्पर्शरूपाणि, जले शब्दस्पर्शरूपरसाः, भुवि शब्दस्पर्शरूपरसगन्धा इति ।

ननु सर्वेषु गुणाः कुतोनाभिव्यज्यन्ते, तदभिव्यञ्जकस्य पञ्चीकरणस्य सर्वत्र साम्यादिति चेन्न, तस्यापञ्चीकरणावस्थायां विद्यमानगुणाभिव्यञ्जकत्वाङ्गीकारात् । न चैवं सर्वत्रैकैकगुणाभिव्यक्तिरेवस्यादिति वाच्यम्, अपञ्चीकृतेष्वपि व्योमादिषु कार्येषु कारणगुणानुवृत्तिस्वीकारेण यथोक्तक्रमेणैकद्वित्रिचतुः पञ्चगुणानां विद्यमानतया पञ्चीकरणस्य तत्तदभिव्यञ्जकत्वंसंभवात् । अनुभूयन्ते च वाय्वादिषु क्रमेण सीसीभडभडचुलचुलकडकडाकाराः शब्दाः । न चाऽयमनुभवो भ्रमः, सति प्रमातरि बाधादर्शनात् । वन्ध्यादिषु स्पर्शादिसद्भावस्त्वविवाद एव ।

ननु सेयं देवतैक्षत हन्तिमास्तिस्रो देवता अनेन जीवेनानात्मन्यनुप्रविश्य नामरूपे व्याकरवाणीति तासां त्रिवृतं त्रिवृतमेकैकं करवाणीति छान्दोग्ये त्रिवृत्करणं श्रूयते, पञ्चीकरणे तु न किमपि प्रमाणं पश्यामः किन्तु व्यवहारमार्गप्राप्तं तदिति व्यर्थस्तदभ्युपगम इति चेदत्र ब्रूमः—न तावत्पञ्चीकरणस्य व्यवहारमार्गप्राप्तत्वादप्रामाण्यं शङ्कितुं शक्यम्, अष्टिकाकरणादीनां शिष्टव्यवहाराणामप्रामाणिकत्वापत्तेः ।

अश्रुतत्वादप्रामाण्यमितिचेत्तर्ह्यत्र साक्षाच्छ्रुतत्वाभावो हेतुः श्रुतार्थापत्त्यभावोऽपि वेति विचारय । आद्ये परमापूर्वादिषु व्यभिचारः श्रुतार्थापत्तेरिह विद्यमानत्वात् ।

न द्वितीयोऽपि । तथा हि छान्दोग्ये तेजःप्रभृतीनां त्रयाणां सृष्टिश्रुतौ तावच्छ्रुत्यन्तरप्रसिद्धाकाशवायुसृष्टेरप्युपसंहरणीयत्त्वं वियदधिकरणे तेजोऽधिकरणेचैकविज्ञानेन सर्वविज्ञानप्रतिज्ञाहान्यादिभिर्हेतुभिर्निर्धारितम् ।

अत्रापि च व्योमाद्युत्पत्तिं प्रतिपादयिष्यामः । तथा च श्रुत्यन्तरैकवाक्यतया पञ्चानां भूतानां सृष्टिं प्रक्रम्य तेषां सूक्ष्मत्वेनाव्यवहार्याणां व्यवहारसिद्धये त्रिवृत्करणं ब्रुवन्त्याः श्रुतेः पञ्चीकरणस्याप्युलक्षणार्थत्वं मन्तव्यम्, अन्यथा वाय्वाकाशयोः सूक्ष्मता-

निवृत्तेरव्यवहार्यतापत्तौ सृष्टानां भूतानां व्यवहाराय त्रिवृत्करणोपदेशानुपपत्तिः केन वार्यते ।

न च वाय्वाकाशयोर्व्यवहार एव नास्तीति वाच्यम्, महानाकाशो महान् वायुरिति सर्वजनप्रतीतिव्यवहारयोर्जागरुकत्वात् । न च वैदिकत्वादेव त्रिवृत्करणमुपेयते न व्यवहारार्थमिति वाच्यम्, त्रिवृत्करणवाक्ये स्वसम्बन्धिफलाभावात्फलवदद्वैतबोधार्थं यथासृष्टिन्यायं त्रिवृत्करणं युक्तं नत्वर्धजरतीयम् ।

अथ श्रुत्यन्तरे भूतद्वयोत्पत्तेरुपेतत्वात्तत्त्यागाच्छान्दोग्यतैत्तरीयादिश्रुत्योर्विरोधनिरासायोपसंहारः क्रियते न तु तथा क्वचित् पञ्चीकरणं श्रुतमस्ति येन तन्न्यायोऽनुसरणीयः स्यादिति चेत्सत्यम्, तथापि न्यायानुसरणं युक्तं यथा त्रिसृष्टिश्रुतौ सृष्टस्य भूतत्रयस्य स्फुटतरव्यवहारार्थं नामरूपव्याकरणोपायत्वेन त्रिवृत्करणं श्रुतं तथा पञ्चसृष्टिश्रुतावपि नामरूप व्याकरणोपायः कश्चिन्महेश्वरस्येक्षितुरुपपन्नः स च श्रुत्यन्तरे त्रिवृत्करणरूपः श्रुतस्तं परिहृत्यान्यकल्पने प्रमाणाभावात् ।

पञ्चीकरणं विना वाय्वाकाशयोः स्फुटतरव्यवहारायोगाच्च युक्तं त्रिवृत्करणश्रुतेः पञ्चीकरणोपलक्षणत्वम् । एतेन पंचीकरणस्य त्रिवृत्करणश्रुतिविरोधादप्रामाणिकत्वमिति निरस्तम् ।

त्रिवृत्करणश्रुतेः पंचीकरणोपलक्षणार्थत्वे निरूपिते तया पंचीकरणस्य विरोधासंभवात् ।

किमर्थं तर्हि श्रुतिः पंचीकरणमेव न प्रतिपादितवतीति चेदत्राहुः आकाशस्य सर्वावकाशत्वेन सर्वाव्यतिरेकाद् वायोश्च सर्वचेष्टाहेतुतया सर्वाऽविनाभूतत्वात्तयोस्तेजः प्रभृतिष्वन्तर्भावं सिद्धवत्कृत्य प्रयोगसौकर्याय त्रिवृत्करणं श्रुतिर्निरूपयामासेति । तस्मादस्ति पंचीकरणं प्रामाणिकमित्यलमतिपल्लवितेन ।

एतेभ्यश्च पञ्चीकृतेभ्यो भूर्भुवः स्वर्महर्जनस्तपःसत्यमित्येतन्नामकानामुपर्युपरिवर्तमानानामतलवितलसुतलरसातलतलातलमहातलपातालाख्यानामधोऽधोवर्तमानानां लोकानां ब्रह्माण्डस्य तत्तल्लोकोचितस्थूलदेहानां तदुचितोपभोग्यानां चोदयो भवति ।

तत्र स्थूलदेहास्तावद्योनिजायोनिजभेदेन द्विविधाः । तत्र योनिजा अपि जरायुजाण्डजभेदेन द्विविधाः । तेषु जरायुजा नृपश्वादेरण्डजाः पक्षिसर्पादिः । अयोनिजास्तु बहुविधा देवनारकपिशाचयूकावृक्षादिदेहभेदात् ।

तत्र देवदेहेष्वपि सूर्यादिलोकस्थाः केचित् पंचीकृततेजोमयाः । वरुणलोकस्थाः पंचीकृतजलोत्पन्नाः । पिशाचादिदेहाः पञ्चीकृतवायुविकाराः । यूकादीनान्तु स्वेदजत्वेन प्रसिद्धा अपि मनुष्यादिदेहवत्पञ्चीकृतभूविकारा एव, तथैव प्रसिद्धेः । स्वेद-

जत्वप्रसिद्धिस्तु तस्य तदुदयनिमित्तत्वात्। तरुतृणादयो भूमिमुद्भिद्य जायन्ते इत्युद्भिदा उच्यन्ते।

ते च सर्वेऽपि "न हि त्रिपुत्रो द्विपुत्र इति कथ्यते" इति न्यायेन पाञ्चभौतिका उच्यन्ते। प्रचुरभागस्य भूतस्य प्राधान्यविवक्षायां "देवदत्तापुत्र" न्यायेन तैजसादिव्यवहारभाजो भवन्ति।

अत्र तार्किका वदन्ति—न पाञ्चभौतिकाः स्थूलदेहाः, प्रत्यक्षाप्रत्यक्षसंयोगस्याप्रत्यक्षत्वनियमेनाप्रत्यक्षाभ्यां गगनपवनाभ्यां सह भूम्यादिभिरारभ्यमाणानां देहानामप्रत्यक्षत्वप्रसङ्गादिति।

अत्र केचित्—अस्ति तावद्देहेषु सर्वेषामपि भूतानां कार्योपलब्धिः। अवकाशव्यूहनपचनक्लेदनकाठिन्यादीनां सर्वानुभवसिद्धत्वात्।

तथा च "कार्येण करणसंप्रत्ययः" इति न्यायेन तेषां कारणतया पञ्चापि भूतानि एकस्मिन् देहे सन्तीति स्थितेः यदि तेषां भूतानां देहावयवत्वाभावात्संयोगमात्रलाभ एव स्यात् तदा तदागमापगमाभ्यां देहस्योपचयापचयौ न स्याताम्। दृश्येते च ताभ्यां तौ। अतस्तन्तुपटयोरिवावयवावयवित्वमेव भूतपञ्चकदेहयोर्युक्तम्। अन्यथा पार्थिवदेहादेरपार्थिवावयवगमापगमाभ्यामुपचयापचयानुपपत्तिः स्यात्।

नहि पटस्यानारम्भकजलार्द्रीकृतस्योपचयस्तदपगमे चापचयो दृश्यते, न वा वारिभस्त्रयोरपि अनलानिलागमापगमाभ्यां परिमाणवैजात्यमुपलभ्यते। एवञ्च यदि भस्त्रादाविवान्यभूतस्य भौमे देहेऽनारम्भकसंयोग एव स्यात्तदा भस्त्रादिदेहयोरविशेषेण व्यूहनादीनां सत्त्वमसत्त्वं वाऽऽपद्येत। अदृष्टवदात्ममनःसंयोगतज्जन्यकृत्यादिरूपहेत्वन्तरस्याप्युभयोस्तौल्यस्यापादयितुं शक्यत्वात्। यत्तु प्रत्यक्षाप्रत्यक्षयोरप्रत्यक्षसंयोगारब्धस्याप्रत्यक्षत्त्वमापादितं तत्तुच्छम्, प्रत्यक्षत्वापत्तेः।

न चैते द्रव्यानारम्भके इति वाच्यम्, तत्कृतद्रव्यारम्भं प्रति प्रतिबन्धकस्य राजाज्ञादेरभावात्।

किञ्च प्रत्यक्षाप्रत्यक्षारब्धस्याप्रत्यक्षत्वे सुतरामप्रत्यक्षारब्धस्य तत्, तथा च त्र्यणुकाप्रत्यत्त्वप्रसङ्गः। एवं तदारब्धस्य तदारब्धस्यापीति कस्याप्यवयविनोऽध्यक्षं न स्यात्।

नचास्पर्शत्वादेकत्वाच्च व्योम्नोनारम्भकतेति शङ्क्यम्, एकस्यापि क्षीरस्य दध्यारम्भकत्वदर्शनेनारम्भवादानुपगमात्। न च क्षीरावयवैरेव दध्युत्पद्यते इति युक्तिमत्, दधिक्षीरयोर्गन्धरसादिसाम्यापत्तेः। क्षीरस्यैव सतः परिणामो दधीत्यङ्गीकारे तु स्याद् वैषम्यं गन्धादेः।

अस्पर्शमपि द्रव्यं यथा गुणारम्भकं दृष्टं तथा द्रव्यारम्भकमप्यस्तु। दृष्टश्चास्पर्शैरपि तमोऽवयवैर्द्रव्यस्याप्यवयवितमस आरम्भ इति अन्यत्रापि स स्वीकर्तव्य। "न हि दृष्टेऽनुपपन्नं नाम" इति न्यायात्।

ननु तमस आलोकाभावरूपत्वाद्भावरूपत्वमपि दुर्लभं कुतस्तद्विशेषरूपद्रव्यत्वम्। तथा हि द्रव्यादिषट्पदार्थान्यतमत्वव्याप्यं हि भावत्वं तदिह तदन्यतमत्वं व्यावर्तमानं "व्यापक व्यावृत्त्या व्याप्यव्यावृत्ति" रिति न्यायेनभावत्वमपि व्यावर्तयति।

तथा हि तत्किं द्रव्यान्तरभूतमुत्तरोत्तरपञ्चकान्तरभूतं वा? आद्ये पृथिव्यादिनवान्यतमदन्यंद्वेति। नाद्यः, रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वसंस्काराख्यचतुर्दशगुणायां भुवि, गन्धरहितस्नेहसहिततद्गुणे जले, संख्यादिपंचशुक्लभास्वररूपस्पर्शपरत्वापरत्वद्रवत्वसंस्काराख्यैकादशगुणे तेजसि, रूपद्रवत्वरहिततद्गुणे वायौ, सशब्दसंख्यादिपंचगुणे व्योम्नि संख्यादिपंचगुणयोरविनाशिनोर्दिक्कालयोः संख्यादिपंचबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाख्यचतुर्दशगुणे जीवात्मनि संख्यादिपंचबुद्धीच्छा प्रयत्नाख्याष्टगुणे महेश्वरे, संख्यादिपरत्वापरत्ववेगाख्याष्टगुणे मनसि चानन्तर्भावात्। अन्तर्भावेतु तावद्गुणत्वापत्तेः। नित्यद्रव्येष्वन्तर्भावे प्रकाशानिवर्त्यत्वापत्तेश्च।

न द्वितीयः, निर्गुणस्य द्रव्यत्वासंभवेन द्रव्यान्तरत्वस्य सुतरामसंभवात्। गुणवत्त्वस्य द्रव्यलक्षणत्वेन तद्रहितस्य द्रव्यत्वव्याघातात्।

बालतमालश्यामलं महच्च दृश्यमानं तमः कथं निर्गुणं रूपपरिमाणगुणवत्वोपलम्भादितिचेन्न, भूमौ हि नीलरूपं गन्धादिभिर्व्याप्तमतस्तन्निवृत्तौ तमसि नीलरूपमपि निवर्तते पूर्वोक्तन्यायात्।

किंच तत्किं निरवयवमुतावयवारभ्यम्? नाद्यः, अस्पर्शैस्तमोऽवयवैस्तदारभ्यमिति तवोक्त्यसिद्धेः। निरवयवद्रव्यस्यात्मादिवन्नित्यत्वापत्त्या पूर्वोक्तदोषप्रसङ्गाच्च।

द्वितीयेऽपि किं स्पर्शवदारभ्यं तद्रहितारभ्यं वा?। नाद्यः, तत्समवायिनां स्पर्शवत्त्वे तस्मिन्नपि स्पर्शोपलम्भप्रसङ्गात्। समवायिकारणगतविशेषगुणस्य कार्ये सजातीयगुणारम्भकत्वनियमात् अस्पर्शैरिति स्वोक्तिविरोधाच्च।

न द्वितीयः, मनोवत्तेषां द्रव्यारम्भकत्वानुपपत्तेः। नाप्युत्तरपंचकान्तर्भावः संभवति। तत्रापि तावद् गुणान्तर्भावे किं रूपान्तर्भूतमितरान्तर्भूतं वा?। आद्येपि किं पृथिव्यादित्रयवृत्ति वा?' नाद्यः, तत्सहचारिणां गुणान्तराणामप्युपलम्भप्रसङ्गात्। न द्वितीयः, तदितरेषां सर्वेषामरूपत्वात् चक्षुर्मात्रग्राह्यस्येतरगुणान्तर्भावरूपसंभवनिरस्तः। नापि कर्मान्तर्भावः, संयोगविभागयोरसमवायिकारणत्वस्य कर्मलक्षणस्य तमस्यभावात्। सामान्यत्वे व्यक्तिव्यङ्ग्यत्वं विशेषत्वेचाश्रयप्रतीत्यपेक्षा समवायत्वे च सम्बन्धिप्रतीत्यपेक्षा स्यात्।

नचास्योपलम्भसंभवः। तदुपलम्भकाभावात्। न च चक्षुरूपलम्भकं तदव्यापारे तदनुपलम्भापातात्। अस्ति निमीलितलोचनस्यापि तमः पश्यामीत्यनुव्यवसायः। अस्मत्पक्षे हि निमीलितलोचनस्यापि सन्तमसालोचनं संभवति आन्तरस्यालोकाभावस्यालोकानपेक्षत्वेन चक्षुषा ग्रहणसंभवात्। भावपक्षेतु आलोकापेक्षाया आवश्यकत्वात्। तथा हि रूपत्वे रूपवत्त्वे वा प्रकाशाजन्यचाक्षुषविषयत्वं न स्यात्, प्रकाशसहकृतस्यैव चक्षुषस्तयोर्ग्रहणे सामर्थ्यात्। पदार्थान्तरस्याप्यान्तरस्य ग्रहणप्रसङ्गाच्च। अस्मत्पक्षे तु प्रकाशाभावस्य प्रकाशानपेक्षत्वात् प्रत्यक्षप्रतियोगिकत्वेन प्रत्यक्षत्वाच्च नानुपपत्तिः।

नापि मन उपलम्भकं वाह्येन्द्रियनिरपेक्षस्य तस्य वहिरप्रवृत्तेः तमसश्च बहिरूपलब्धेः। तस्मात् षट्स्वपि भावेषु अनन्तर्भावात्तद्भावे वोपलम्भकाभावाच्च प्रौढप्रकाशाभावस्तमः। अयमत्र प्रयोगः—तमः पदमालोकाभाववाचकम्, आलोकानपेक्षचक्षुर्ग्राह्यवाचकत्वात् आलोकाभावपदवदिति चेदत्र ब्रूमः, अस्ति हि नीलोत्पलदलश्यामलं तम इत्यनुभवः। न चैतादृशोऽनुभव एव नोदेति, यस्त्वनुभवव्यवहारः सत्वनुभवाभाव एवानुभवभ्रम प्रयुक्त इति साम्प्रतम्, तद्व्यवहारस्य तत्प्रतीतिमन्तरेणासंभवात्।

नचालोकादर्शनविषयज्ञानमेव तमः पश्यामीतिव्यवहारविषय इति भ्रमितव्यम्, तस्याचाक्षुषत्वेनेदमितिव्यवहाराद्यनुत्पादकत्वात्। पटादौ शौक्ल्याभावे नीलस्य व्यवहार इव प्रकाशाभावोऽयमौपचारिक इति चेन्न, मुख्ये वाधकाभावात्।

न च रूपत्वे रूपवत्त्वे वाऽऽलोकानपेक्षचक्षुर्जन्यज्ञानगोचरत्वासंभवो वाधक इति वाच्यम्, प्रकाशोपमर्दस्वभावस्य तमसस्तदभावव्यञ्जनीयत्वेन तन्निरपेक्षचक्षुर्गोचरत्वोपपत्तेः।

न चान्यत्रालोकसापेक्षस्य चक्षुषः कथं तं विना तमसि सामर्थ्यमितिशङ्क्यम्, सामर्थ्यस्य फलानुमेयत्वात्। अन्यथा प्रकाशाभावस्य रूपवदभावत्वेन घटाभाववत्प्रकाशनिरपेक्षचक्षुर्गोचरत्वं न स्यात्। तद्विरोधित्वेन तदनपेक्षत्वं तु प्रकृतेऽपि न दण्डवारितम्।

न चाभिव्ययञ्जकतयाऽप्यवश्यापेक्षणीये प्रकाशाभावे तावतैव तमः शब्दसार्थक्यात्कृतमधिकान्धकारकल्पनयेति वाच्यम्, यतः कल्पयन्तं प्रत्ययं पर्यनुयोगो न प्रत्यक्षं प्रमाणयन्तं प्रति आभासतोद्भावनीयेति चेदुद्भाव्यतां सैव तु केनेति विवेचनीयम्। न हि न नीलं तम इति प्रत्यक्षमस्ति वाधकम्। अनुमानमिति चेत्तस्यैव तावदध्यक्षविध्वस्तविषयस्य बाधव्याधिचिकित्सां विधेहि।

न च निमीलितलोचनस्य तद्व्यापाराभावेऽपि तमस उपलम्भादचाक्षुषत्वमिति भ्रमितव्यम्। तत्रापि सूक्ष्मपटलान्तर्वर्ति तमसश्चक्षुर्व्यापारादेवोपलम्भात् न च रूपवदन्तरग्रहप्रसङ्गः। तत्रालोकपापेक्षत्वात्।

न चेन्द्रियाणामन्तःप्रवृत्तिरदृष्टचरी, पिहितकर्णपुटस्य श्रोत्रव्यापारादेवान्तरशब्दोपलम्भदर्शनात्। एवमन्येषामपीन्द्रियाणां क्वचिदान्तरविषयग्रहो दृश्यते। यथाहुः—

कदाचित्पिहिते कर्णे श्रूयते शब्द आन्तरः ।
प्राणवायौ जाठराग्नौ जलपाने च भक्षणे ॥
व्यज्यन्ते ह्यान्तरस्पर्शा मीलने चान्तरं तमः ।
उद्गारे रसगन्धौ चेत्यक्षाणामन्तरग्रहः ॥इति॥

अथ नीरूपमस्य न संभवति, तद् व्यापकगन्धवैधुर्यादिति चेन्न, अत्र हि गन्धव्यावृत्त्या नीलव्यावृत्तिरनुमित्सिता सा चायुक्ता रूपोपलम्भविरोधात् । यदि चैवमपि नाङ्गीकुरुषे तर्हि गन्धव्यावृत्त्यानुष्णाशीतस्पर्शमपि वायोर्व्यावर्तय ।

अथानुष्णाशीतस्पर्शमात्रस्य न गन्धेन व्याप्तिः किन्तु तद्विशेषस्य पाकजनाम्नः तर्हि इहापि न नीलरूपमात्रस्य गन्धेन व्याप्तिरपितु पाकजस्यैवेति निर्धारय ।

नन्वपाकजस्पर्शवदपाकजनीलरूपसिद्धावेतत्स्यात्तदेव तु कुतः प्रमाणादिति चेन्मैवम्, सद्भावग्राहिणोऽध्यक्षस्योभयत्र साम्यात् ।

ननु तमो रूपहितं स्पर्शरहितत्वादाकाशवदित्यनुमानविरोधाद् रूपवत्तैव नास्ति इति कुतस्तद्विशेषनीलरूपवत्तेति चेन्न रूपग्राहिप्रत्यक्षविरोधहेतोर्बाधितत्वेन तदभावानुमित्यनुदयात् । न चेत्स्पर्शप्रतीतेरप्यभासत्वे वायुः स्पर्शशून्यः रूपशून्यत्वादाकाशवदित्यनुमानोदयस्य सुवचत्वात् । अन्यत्र रूपवतामेव स्पर्शवत्त्वनियमात् ।

यत्तु यत्स्पर्शरहितं न तद् द्रव्यारम्भकं यथा मन इति व्याप्त्या स्पर्शशून्यतयाऽङ्गीकृततमःपरमाणूनां द्रव्यारम्भकत्वव्याघात इत्युक्तं तत्तुच्छम्, मनसि द्रव्यानारम्भकत्वे तदारब्धकार्यवैयर्थ्यस्योपाधित्वेन स्पर्शशून्यत्वद्रव्यानारम्भकत्वयोर्व्याप्त्यभावात् ।

न हि देहतयेन्द्रियतया विषयतया वा मन आरब्धद्रव्यस्य भोगसाधनत्वं संभवति । पार्थिवाप्यतैजसवायवीयाश्चतुर्विधा हि देहाः प्रमाणवन्तः । तत्र पार्थिवाः केचिद् य इमे दृश्यन्ते । आप्यादीनि तु तत्तच्छास्त्रगम्यानीति ते स्थितिः । न पुनश्चातुर्विध्यानवरुद्धशरीरसद्भावे प्रामाणमस्तीति न तदारब्धस्य देहत्वं मृतदेहवदिन्द्रियानाश्रयतया भोगासाधनत्वात् ।

नापि विषतया रूपस्पर्शशून्यारब्धस्य तच्छून्यतया विषयत्वायोगात् । देहेन्द्रियातिरिक्तोऽवयवी विषयत्युपगमात् । नापीन्द्रियतया, मनसएवेन्द्रियतया तदारब्धेन्द्रियान्तरोपगमवैयर्थ्यात् ।

अथ मास्तु त्रिविधान्तर्भावोऽन्तर्भूतस्यैव किमिति भोगसाधनत्वं न स्याद् गुणमदिवदिति चेन्न, तदनन्तर्भूते कार्यद्रव्ये भोगहेतुत्वस्य त्वयानुपेतत्वात्, आत्मादीनां रूपस्पर्शशून्यानां देहेन्द्रियविषयारम्भायोगात्समानमेव द्रव्यारम्भवैयर्थ्यम् । महतोरूपवतस्तमसस्तु संभवति भोगसाधनतेति नारम्भवैयर्थ्यम् । त्वद्रीत्या चायमारम्भवादः

समर्थितः नास्माकमयं समर्थनीयः नह्यस्माकमनिर्वचनीयाचिन्त्यसामर्थ्यमुपाधिरभिहितः। तदेश तु नास्त्यस्मत्पक्षे तस्यापि सावयवतया परिणामित्वेनारम्भकत्वात्। ब्रह्मणश्च सर्वशून्यस्यसर्वप्रपञ्चोपादानकारणत्वाङ्गीकारात्। चलत्वादपि घटादिवत् तमो द्रव्यान्तरम्।

ननु घटादि गुणानां क्रियारहितानां यथा घटादिगमनानुविधानेऽपि न स्वाभाविकं गमनं तथास्याप्यप्यानुविधाननियमान्न स्वाभाविकं चलनमितिचेत्तत्किं तमः स्वाभाविकचलनविहीनमितरचलनानुविधायित्वाद् रूपादिवदित्यनुमिनोपि तथा च सुवर्णेनैकान्तिकम्। तत्र ह्यनुच्छिन्नद्रव्यस्याकरजतेजसः सुवर्णस्य कठिनभौमद्रव्येण नित्यमवष्टम्भात्तत्पतनाद्यनुविधाननियमोऽस्तिं, न चैतावतागमस्य स्वाभाविकत्वहानिः।

ननु न वयमनुमिमीमहे किन्तु चलने प्रमाणमेव नास्ति। प्रतीतिस्तु अन्यानुविधानेनान्यथासिद्धेति चेन्न, अनुविधानस्यैवानिरूपणात्। तथा हि किं यन्निमित्तं छायाद्यात्मकं तमस्दनुविधीयते यन्निवर्त्यं तद्वा? नाद्यः, निश्चलेऽपि वृक्षादौ तच्छायायाश्चलनोपलम्भे नियमाभावात्। द्वितीयोऽप्ययुक्तः वैपरीत्यात्।

यदि हि तदनुविदध्यात्तदा तस्मिन् गच्छति गच्छतीति आगच्छति आगच्छतीतिप्रतीतिः स्यान्न तु सास्ति किन्तु दीपाद्यागमने गच्छति तमः गमने चागच्छतीति प्रतीयते।

किञ्च यस्य हि यदुदयसमय एव ध्वंसस्तस्य कथं तदुदयानन्तरं स्थितिस्तत्क्रियानुकरणं वा अस्थितस्यानुकरणात्तदनेन भावत्वविभावनेनोत्पत्तिसमर्थनेन गुणवत्तया द्रव्यत्वदीपनेन गतेरनागन्तुकता निरूपणेनोपलम्भकोन्मीलनेन च गुणवत्त्वाद्यनुगुणप्रमाणान्वेषणपरिदूनमानसतार्किकप्रवरदैन्यमप्यपास्तं मन्तव्यम्।

किञ्च चक्षुः प्रकाशाजन्यरूपिद्रव्यप्रत्क्षजनकं रूपिद्रव्यग्राह्यकेन्द्रियत्वात् त्वगिन्द्रियवत्, प्रकाशाजन्यप्रत्यक्षक्षममित्युक्ते विवक्षितप्रकाशाभावसाधनेनार्थान्तरतेति द्रव्यग्रहणम्। प्रकाशाजन्यद्रव्यप्रत्यक्षक्षमित्युक्तेऽप्यर्थान्तरता भट्टनये कालादीनामपि तथात्वादिति रूपिग्रहणम्। घटादिप्रतीत्या सिद्धसाधनतेति प्रकाशाजन्येत्युक्तम्। अनुमानादेर्व्यावृत्त्यर्थं हेताविन्द्रियग्रहणम्। इन्द्रियत्वादित्युक्ते घ्राणेऽनैकान्तिकता तस्य द्रव्यग्राहित्वाभावादिति द्रव्यग्राहकेन्द्रियत्वादित्युक्तम्।

तावत्युक्ते मनस्यनैकान्तिकता, प्रतिवादिनस्तस्यात्मद्रव्यग्राहकत्वेऽपि रूपिद्रव्ये स्वातन्त्र्येणग्राहकत्वाभावादिति रूपीत्युक्तम्। साध्यहेत्वोर्द्रव्यपदं स्पष्टार्थं वास्तु। त्वगिन्द्रियस्योक्तसाध्यवत्त्वे रूपरहितेन्द्रियत्वमुपाधिरिति चेन्न, यद् रूपीन्द्रियं तन्न प्रकाशाजन्यरूपिप्रत्यक्षकारणं रसनावदिति व्यतिरेकव्याप्तौ रूपग्राहकत्वस्योपाधित्वात्।

व्यतिरेकसिद्धयैव चादृष्टादाविन्द्रियसन्निसर्षे उलूकाद्रिदृष्टौ च साध्याव्याप्तिवारणाय मनुष्येन्द्रियत्वविशेषितोक्तसाधनस्योपाधेर्विधानमपि निरस्तम्। तथा च तमः पदमित्याद्यनुमानं यदुक्तं तत्प्रमाणबलाद् भावरूपत्वे कालातीतं विपक्षे बाधकाभावाच्छङ्कितोपाधि च।

न च प्रकाशनिरपेक्षचक्षुर्ग्राह्यत्वहानिः, तस्य प्रकाशोपमर्दस्वभावत्वेन तदभावव्यङ्ग्यतयाऽप्युपपत्तेः। तमःपदस्य नानार्थवाचकत्वसिद्धावप्यस्य चरितार्थत्वेन तमसोऽभावत्वासिद्धिश्च। प्रकाशसंसर्गाभावो न तमःपदवाच्यः अभावत्वाद् घटाभाववदित्यादिना सत्प्रतिपक्षं च, अभावप्रमाणगम्याभाववादिनः साधनवैकल्यञ्च दृष्टान्तस्येत्यादिदोषादुपेक्ष्यम्।

मनस्त्वं स्पर्शवदवृत्तिवेगवद्वृत्तिजात्यन्यत् मेयत्वाद् घटवदिति तमसो द्रव्यान्तरत्वसिद्धिरित्यप्येके। स्वराद्धान्ते तमसः साक्षिवेद्यत्वेप्यभ्युपगमसिद्धान्तेन चाक्षुषकत्वमाश्रित्य द्रव्यत्वं साधितमित्यलमतिपङ्केन। प्रकृतमनुसरामः—

श्रुतिरपि देहस्य संकीर्णद्रव्यारब्धतां दर्शयति अन्नमशितं त्रेधा विधीयते इत्यादिना। यज्ञवल्क्योऽप्याह—

पञ्चधातून् स्वयं षष्ठ आदत्ते युगपत्प्रभुः॥ इति॥

न च संयोगमात्रेणाकाशादेः समवायित्वाङ्गीकारे दिक्कालयोरपि तथात्वप्रसङ्ग इति वाच्यम्, आकाशेश्वरातिरिक्तयोस्तयोरनङ्गीकारात्। पूर्वोक्तन्यायेन तदारब्धस्य वैयर्थ्याच्च। एवञ्च पञ्चीकृतपञ्चभूतकार्या देहा इति सम्प्रदायानुसारेण।

वस्तुतस्तु पञ्चानां भूतानां पञ्चात्मकत्वस्य दर्शितत्वादारम्भवादस्य निराकृतत्वाद्विस्तरेण निराकरिष्यमाणत्वाच्च नात्र तार्किकोक्तशङ्कावकाशो नवैकैकभूतकार्यत्वेऽपि तदिष्टसिद्धिः पाञ्चभौतिकत्वानपायादिति बोध्यम्। तस्मात्सर्वोऽपि स्थूलदेहः पाञ्चभौतिक इति सिद्धम्। स चैकानेकज्ञानगोचरतया वातवत्समष्टिवृक्षवद् व्यष्टिश्च भवति।

अथवा व्यक्तिषु गोत्वादिवत्सर्वव्यष्टिस्वनुस्यूतं पञ्चीकृतभूतकार्यं ब्रह्माण्डात्मकं व्यापकं समष्टिः प्रत्येकमस्मदादीनां शरीरं व्यष्टिः। एतत्समष्ट्युपहितं चैतन्यं "यस्त्वेतमेव प्रादेशमात्रमभिनिविष्टमात्मानं वैश्वानरमुपास्ते" इति श्रुत्या विश्वनराभिमानित्वाद् वैश्वानर इत्युच्यते। "सैषा विराडन्नादी" "पुरुष एवेदं सर्वमित्यादिश्रुत्या च तदेव विविधं राजमानत्वात्पूर्णत्वाच्च विराडिति पुरुष इति चोच्यते।

अस्यैषा समष्टिः स्थूलदेहः। अन्नं विराडितिश्रुत्यान्नविकारत्वादन्नमयकोश

इप्युच्यते। एतद्व्यष्ट्युपहितं चैतन्यं विश्वशरीरप्रविष्टत्वाद् विश्व इत्युच्यते। तथा हि—

जीवस्य त्रय उपाधयः। सुषुप्त्यादौ बुद्ध्यादिसंकारोपरञ्जितमज्ञानमात्रमुपाधिः। स्वप्ने वासनामयं लिङ्गशरीरमुपाधिः। तच्चलिङ्गमज्ञानोपरञ्जितमहमज्ञ इति प्रतीतेः। जाग्रदवस्थायान्तु उभयशरीरसंसृष्टं स्थूलशरीरमुपाधिः। स्थूलोऽहं निश्चिनोमि अज्ञोऽहमित्याद्यनुभवात्।

तथा च पूर्वपूर्वोपाधिविशिष्टस्यैवोत्तरोत्तरोपाधिप्रवेशात्सर्वशरीरप्रविष्टत्वेनैव स्थूलभोगायतनाभिमानिनो विश्व इति संज्ञा। अथाप्येषा व्यष्टिः स्थूलशरीरम्।

"एष पुरुषोऽन्नरसमय इति श्रुतेरन्नविकारत्वादन्नमय इति, बन्धहेतुत्वात् कोश इति स्थूलभोगायतनत्वाच्च जाग्रदित्युच्यते।

न च प्राक् पाञ्चभौतिकं शरीरं प्रतिपादितम्। इदानीं तु तदेवान्नमयमुच्यते इति पूर्वोत्तरविरोधः शङ्क्यः पंचीकृताया भुवः व्रीह्यास्याकारेण परिणतत्वात्तद्धेतोरेव-तदस्तु किन्तेनेतिन्यायेन पाञ्चभौतिकत्वानपायादिति सर्वं चतुरस्रम्।

ईषत्सत्त्वरजस्कतमःप्रधानविक्षेप शक्तिमदज्ञानोपहितचैतन्यादाकाशादीनि पञ्चभूतानि जायन्ते, तेषु च सत्त्वरजस्तमांसि कारणगुणक्रमन्यायेनोत्पद्यन्ते। तत्राकाशादिगतरजोंशेभ्यो मिलितेभ्यः प्राण उत्पद्यते। स चैकोऽपि स्थानोपाधिभेदात् प्राणापानादिसंज्ञां लभते। तथा हि—

अग्रतो निःसरणशीलो हृदयस्थानः प्राणः "प्राणो हृदये" इति श्रुतेः। अधोगमनवान् पायूपस्थवर्ती मलमूत्रादिविसर्गहेतुरपानः। सर्वतो गमनवान् सर्वदेहवर्त्ती व्यानः कण्ठस्थ उत्क्रमणवायुरुदानः। यद्यपि "चक्षुषो वा मूर्ध्नो वा अन्येभ्योवा शरीरदेशेभ्यः" इति श्रुतेरुत्क्रमणस्य चक्षुरादिद्वारेष्वनियमस्तथापि कण्ठसम्बन्धस्य प्रायेण नियतत्वात्कण्ठस्थत्वोक्तिर्न विरुध्यते। देहमध्यगोऽशितपीतान्नजलादेः समं नयनात्समानः।

छर्द्युन्मीलनादिक्षुज्जृम्भणपोषणकराः नागकूर्मकृकल देवदत्तधनंञ्जयाख्याः पंचान्ये वायव इत्यपि केचित्। नागादीनां प्राणादिष्वन्तर्भावात् प्राणादयः पंचैवेत्यौपनिषदः। तथा हि—

छर्दिरूर्ध्वमुखस्य वायोः क्रिया। उर्ध्वमुखश्च वायुरुदान ईत्युक्तम् एवञ्चोदानेनैव छर्देरपि सिद्धौ तत्कर्तुर्नागस्योदानेऽन्तर्भावः उन्मीलननिमीलनयोरङ्गचेष्टान्तर्गतत्वात्तस्याश्च व्याननिमित्तकत्वादुन्मीलनादिकर्तुः कूर्मस्य व्यानेऽन्तर्भावः। समानेनाशितपीतादीनां पाकेन रसादिभावमासाद्य सर्वाङ्गेषु तत्प्रवेशने कृते सत्येव क्षुधोत्पत्ते-

स्तद्धेतोः कृकलस्य समानेऽन्तर्भावः। जृम्भणस्य निद्रालस्यादिहेतुकत्वान्निद्रालस्यादिश्च वातुलाद्यन्नोपजीवननिमित्तकत्वादन्नस्वीकरणस्य चापानकार्यत्वादपान एव परम्परया जृम्भणहेतोर्देवदत्तस्यान्तर्भावः।

अपानाख्यास्यान्तर्मुखतया देहे प्रविशतो वायोरन्नस्वीकरणहेतुत्वमैतरेयके समाम्नायते, "तदपानेनाजिघृक्षत्" इत्यादि। रसलोहितमांसादिक्रमेण देहेऽन्नपरिणामे सत्येव पुष्टेरुपपत्तेः रसादिनयनहेतोः समाने धनञ्जयस्यान्तर्भावः।

तथा च प्राणादीनामेवयथायथं छर्द्यादिक्रियाहेतुतयाऽवस्थान्तरमापद्यमानानां नागादिसंज्ञाया अपि संभवे तेषां तत्त्वान्तरत्वकल्पनमप्रामाणिकगौरवग्रस्तम्। श्रुतौ तु पंचानामेव प्राणानां तत्र तत्र श्रवणान्नाप्रामाणिकीयं कल्पना लघ्वी च।

अपानाद्योऽप्येकस्यैव मुख्यस्य प्राणस्य वृत्तिविशेषा एव न तत्त्वान्तरभूताः, अतः प्राणोऽपानोव्यानउदानसमान इति बृहदारण्यके वृत्तिमतः प्राणस्य निरुपसर्गानिशब्दवाच्यस्य पृथङ्निर्देशात् तथा च सूत्रं "पंचवृत्तिर्मनोवद्व्यपदेशात्" इति।

ननु मुख्यप्राणोऽपि देहे व्योमवद् वृत्तिलाभमात्रेणाऽवस्थितो बाह्यवायुरेवास्तु पञ्जरचालनन्यायेन देहचालनहेतुर्वागादीनां सामान्यवृत्तिरूपा क्रिया वाऽस्तु किमपञ्चीकृतभूतपञ्चकरजोंऽशोद्भूतवायुविशेषकल्पनागौरवेणेति चेन्मैवम्, "एतस्माज्जायते-प्राणो मनः सर्वेन्द्रियाणि च खं वायुः" इति श्रुतौ वायोरिन्द्रियाणांच प्राणात्पृथङ् निर्देशात्। तथा च न्यायः—"न वायुक्रिये पृथगुपदेशात्" इति "अणुश्चे" त्यादिन्यायवशादिन्द्रियवत् सूक्ष्मत्वादिकमपि प्राणस्यानुसन्धेयमिति संक्षेपः।

वाक्पाणिपादपायूपस्थाख्यानि पञ्चकर्मेन्द्रियाणि व्यस्तेभ्यं आकाशादिरजोंऽशेभ्यः पृथक् पृथक् क्रमेण जायन्ते तानि च यथासंख्यन्यायेनाग्नीन्द्रोपेन्द्रयमप्रजापतिभिरनुगृहीतानि वचनादागमनविसर्गानन्दक्रियासाधनानि भवन्ति।

यत्तु वागादिष्विन्द्रियत्वमप्रसिद्धम्। प्राणवायुनैव तत्तद्गोलकनिविष्टेन तत्तत्क्रियासंभवात्तत्कल्पनं व्यर्थञ्चेति तार्किका आहुस्तत्तु च्छम्, प्रज्ञया वाचं समारुह्य वाचा हि सर्वाणि नामानि आप्नोतीति कौषीतक्यादौ चक्षुरादिभिः सह वाचः समभिव्याहृतत्वात्। अथर्वणे च चक्षुश्च द्रष्टव्यञ्चेत्यादिना सविषयाणीन्द्रियाण्यनुक्रम्य हस्तौ चादातव्यं चोपस्थश्चानन्दयितव्यञ्च पायुश्च विसर्जयितव्यञ्च पादौ च गन्तव्यञ्चेति हस्तादीनामपि सविषयाणां समभिव्याहृतत्वात्। पुराणादिषु अनेकत्रैतदर्थस्योपबृंहणाच्च।

एतत्कर्मेन्द्रियसहितं पूर्वोक्तप्राणादिपञ्चकं प्राणमयकोशो भवतीति आकाशादिसात्त्विकांशेभ्यो मिलितेभ्योऽन्तःकरणं जायते। तच्च मनोबुद्धिचित्ताहङ्काराख्यवृत्तिभेदाच्चतुर्विधं विधुविधिहरिहरैरनुगृहीतं सत्तत्तद्व्यवहारक्षमं भवति। तत्र संकल्पविकल्पिकात्मिकान्तःकरणवृत्तिर्मनः, निश्चयात्मिका सा बुद्धिः, अनुसन्धानात्मिका

सा चित्तम्, अभिमानात्मिका सा अहङ्कार इति। यत्तुवेदान्तप्रकरणेषु प्रायः बुद्धिमनसोरेव निर्देशो दृश्यते तच्चित्ताहङ्कारयोस्तदन्तर्भावाभिप्रायेण। तत्र चित्तस्य बुद्धावन्तर्भावः। इदमित्थमेवेति विषयपारीच्छित्तिरूपत्वाविशेषात् अहङ्कारस्य मनस्यन्तर्भावः। तस्यापि संकल्पविकल्पात्मिकत्वात्।

एवञ्च स्वरूपाभेदेऽपि विषयभेदात् क्वचिच्चिताहङ्कारयोर्बुद्धिमनोभ्यां पृथङ् निर्देशः। बुद्धेर्ह्यज्ञातो विषयः चित्तस्य तु पूर्वानुभूतः। तथा च मनसो बाह्याभ्यन्तरश्च यथायोग्यं सर्वोऽपि विषयः। चित्तस्य तु अहङ्कारस्यत्वनात्मोपहित आत्मैवेति।

अतो विषयभेदेऽपि स्वरूपाभेदाद्युक्तोऽन्तर्भावः। व्योमादिसात्त्विकांशेभ्यो-व्यस्तेभ्यः क्रमेणश्रोत्रत्वक्चक्षूरसनाघ्राणाख्यानि पंच बुद्धीन्द्रियाणि जायन्ते तानि च दिग्वातार्कवरुणाश्विभिर्नियन्त्रितानि क्रमेण शब्दस्पर्शरूपरसगन्धबोधसाधनानि भवन्ति।

एतानि चेन्द्रियाण्येकादश भवन्ति, न न्यूनानि नाधिकानि, "दश वै पुरुषे प्राणा आत्मैकादश" इति श्रुतेः। आत्माऽत्रान्तःकरणं प्राणा इन्द्रियाणि। भौतिकत्वं चैषामन्नमयं सौम्यमनः आपोमयः प्राणस्तेजोमयी वागिति श्रौतलिङ्गसिद्धम्।

शब्दादिषु पञ्चसु तत्तद्गुणग्राहकत्वेन हेतुना च ज्ञानेन्द्रियाणां तत्तद्भूतकार्यत्वम्। अन्तःकरणस्य तु शब्दादिपञ्चग्राहकेन्द्रियत्वेन पाञ्चभौतिकत्वम्। अन्नमयत्वादि श्रुतिस्तु तदधीनस्थितिकत्वादिनेति विज्ञेयम्। एतेन प्राणोऽपि व्याख्यातः।

इन्द्रियत्वञ्च मनसो वाचस्पतिमतानुसारेणोक्तं मतान्तरन्तु ब्राह्मणपरिव्राजकन्याये दर्शयिष्यामः।

न चाग्निर्वाग् भूत्वा मुखं प्राविशदित्यादिनाग्न्यादिदेवानामेव सुखादि वागादीन्द्रियरूपेण प्रवेश श्रवणात्कथमेषां भौतिकत्वमिति शङ्क्यम्, देवानां तच्छरीरकत्वेन तत्र प्रवेशस्यैवाग्निर्वाग् भूत्वेत्याद्याम्नात्।

न चैषां भौतिकत्वप्रतिपादनमेतस्माज्जायते प्राण इत्यादिश्रुतिविरुद्धम्, तया तेषां साक्षाद् ब्रह्मकार्यत्वप्रतिपादनादितिमन्तव्यम्। तत्रार्थक्रममाश्रित्य भूतभावमापन्नात्तस्मादेषामुत्पत्तेराश्रयणादित्यलमतिपल्लवितेन। प्रकृतमनुसरामः।

एतैः पञ्चभिर्ज्ञानेन्द्रियैः सहितं मनो मनोमयकोश इत्युच्यते। तैरेव सहिता बुद्धि विज्ञानमयकोश इत्यभिधीयते। विज्ञानमयावच्छिन्नं चैतन्यं च कर्तृत्वाद्यभिमानित्वेनेह लोकगामी व्यावहारिको जीव इत्युच्यते। "विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि चेति श्रुतिस्तस्य कर्तृत्वं दर्शयाति। ध्यायतीव लेलायतीति श्रुतिरिवशब्देन कर्तृत्वाभासतां दर्शयति।

अत्र केचिदेतेषु विज्ञानमयो ज्ञानशक्तिमान् कर्ता मनोमय इच्छाशक्तिमान् करणरूपः, प्राणमयः क्रियाशक्तिमान् कार्यरूप इति विभागमाहुः न युक्तञ्चैतत्।

योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः इतिश्रुतेर्विज्ञानचैतन्यं प्रति प्रति सन्निहितत्वाद् ज्ञानशक्तिमत्त्वम्, विज्ञानं यज्ञं तनुते इत्यादिश्रुतेः कर्तृत्वञ्च।

कामः संकल्प इत्यादिश्रुतेः कामापर नामधेयाया इच्छाया मनोवृत्तित्वनिश्चयादिच्छाशक्तिमत्त्वं मनोमयस्य। विवेकसाधनत्वाच्च करणत्वमपि आत्मेन्द्रियविषयसन्निकर्षे सत्यपि यदन्वयव्यतिरेकाभ्यां बोधसत्त्वासत्त्वे तन्मन इदमिष्टमिदं नेति विवेकसाधनत्त्वात् करणपक्षपातीति युक्तं तस्य करणात्वम्।

तथा च श्रुतिः "अन्यत्रमना अभूवं नादर्शमन्यत्रमना अभूवं नाश्रौषम्" इति। तस्मादतिपृष्ठत्वः स्पृष्टो मनसा विजानातीति चावश्यं चोपेयं मनः अन्यथा सर्वेन्द्रियाणां स्वस्वविषयसन्निधाने मनोऽतिरिक्तसामग्र्याः सत्त्वाद् युगपत्सर्वविषयोपलब्धिप्रसङ्गः, सत्यामपि सामग्र्यां फलाभावात्कस्याप्युपलम्भो न स्यात्। अथैकस्योपलम्भायाऽनुपलम्भाय चेतरेषामात्मन इन्द्रियस्य वा शक्तिप्रतिबन्धोऽङ्गीक्रियत इति चेन्न, निर्धर्मक आत्मनि शक्तेरभावात्। इन्द्रियशक्तिप्रतिबन्धकाभावाच्च।

तस्माद् व्यासङ्गस्थल इच्छैव नियामिकेत्यनिच्छताऽप्युपेयं, सा च मनोवृत्तिः। तदुक्तं नित्योपलब्ध्यानुपलब्धिप्रसङ्गोऽन्यतरनियमोवान्यथेति। तथा यथा प्रयोज्य आचरणे युक्त एवमेवायमस्मिन् शरीरे प्राणो युक्तः। कस्मिन्नुत्क्रान्ते त्वहन्मुत्क्रान्तो भविष्यामि कस्मिन् वा प्रतिष्ठिते प्रतिष्ठास्यामीति, सप्राणमसृजतेत्यादिश्रुतेः प्राणस्य क्रियाशक्तिमत्त्वम्। तौ मिथुनं समेतां ततः प्राणोऽजायतेति प्राणस्यवाङ्मनसोर्मिथुनीभूतयोरुत्पत्तिश्रवणात् कार्यरूपत्वञ्चास्येत्यलं बहुना।

एतत् कोशत्रयं मिलितं सत् सूक्ष्मशरीरमित्युच्यते। शरीरस्य सूक्ष्मत्वञ्चावयवाणुत्वप्रयुक्तम्। अणुत्वञ्चेन्द्रियादिरूपावयवानां परिच्छिन्नत्वे सति सूक्ष्मत्वलक्षणमुपेयं न तु परमाणुत्वलक्षणम्। तथासति सर्वदेहव्यापिकार्यासंभवप्रसङ्गात्। विभुत्वे तूत्क्रान्तिगत्यागतिश्रुतिविरोधापत्तेः स्थूलत्वोपगमेऽप्युत्क्रान्तिसमये बिलान्निर्गच्छन्त इव सर्पा देहच्छिद्रेभ्यो निस्सरन्त इन्द्रियादयः प्रत्यक्षेणोपलभ्येरन्, नचोपलभ्यन्ते। तस्मादुक्तप्रकारेणाणव एवेन्द्रियादयः सूक्ष्मदेहावयवभूताः। ते च सप्तदशैव बुद्धीन्द्रियपञ्चकं कर्मेन्द्रियपञ्चकं प्राणपञ्चकं बुद्धिमनश्चेति। इदमेव च सप्तदशावयवात्मकं सूक्ष्मशरीरं लीनं प्रत्यगात्मानं गमयतीति वा लिङ्ग्यते ज्ञाप्यते प्रत्यगात्मसद्भावोऽनेनेति वा लिङ्गमिति व्यवह्रियते वेदान्ते। स्यादेतत् सप्तदशावयवं लिङ्गमिति कथं निर्णयः। यतो वार्तिककाराः पञ्चीकरणवार्तिके पुर्यष्टकं लिङ्गमाहुः—

ज्ञानेन्द्रियाणि पञ्चैव पञ्च कर्मेन्द्रियाणि च।
मनो बुद्धिरहङ्कारश्चित्तं चेति चतुष्टयम्॥
प्राणोऽपानस्तथा व्यान उदानाख्यस्तथैव च।
समानश्चेति पञ्चैताः कीर्तिताः प्राणवृत्तयः॥

खं वाय्वग्न्यब्धरित्र्यश्च भूतसूक्ष्माणि पञ्च च।
अविद्याकामकर्माणि लिङ्गं पुर्यष्टकं विदुः ॥ इति।

अन्ये तु भूतसूक्ष्मपञ्चकं ज्ञानकर्मेन्द्रियपञ्चकद्वयं चतुर्वृत्तिकमेकमन्तःकरणं पञ्चवृत्तिक एकः प्राणश्चेति लिङ्गं वर्णयन्ति। न चैषां विकल्पः संभवति क्रिया हि विकल्प्यते न वस्त्विति न्यायेन तस्य क्रियाविषयत्वनियमेन वस्तुनि तदयोगात्। नापि समुच्चयस्तत्र प्रमाणाभावात्। परस्परविरोधेन तदसंभवाच्च। तथा च कथमेतेषु पक्षेषु विरोधसमाधानमिति चेच्छृणु—सप्तदशकस्यैव संक्षेपविस्तरभेदेन तत्र तत्र तथा तथा कथनान्न विरोधगन्धोऽपि। तथा हि—

इहोक्तानां हि सप्तदशानामवयवानां भूतसूक्ष्माण्युपादानानि तदुपादानञ्चाविद्या। ततश्चोपादानोपादेययोरभेदादविद्या भूतसूक्ष्मेभ्यस्तानि च लिङ्गावयवेभ्यो न पृथग् विवक्ष्यन्ते। कामकर्मणी अप्यन्तःकरणवृत्तित्वान्न ततः पृथगभिप्रेयेते इति न वार्तिकविरोधः। मतान्तरे तु भूतसूक्ष्माणि तत्कार्येभ्यः पृथक्कृत्यान्तःकरणप्राणयोश्चवृत्तिमतोरभेदं गृहीत्वा सप्तदशत्वं निरूपितम्। सप्तदश प्रजापतिरित्यागमेनापि हिरण्यगर्भस्य सप्तदशत्वावगमात् सप्तदशावयवमेवलिङ्गशरीरं मुख्यमिति बोध्यम् यथाहुः—

"मुख्यन्तु सप्तदशकं प्रथितं हि लिङ्गम्" इति।

अत्रापि सर्वं लिङ्गमेकधीगोचरत्वेन वनवत्समष्टिरनेकधीगोचरत्वेन वृक्षवद् व्यष्टिश्च भवति। अथवा पूर्वोक्तापंचीकृतभूतेभ्यः सर्वव्यापकं लिङ्गशरीरं पृथगेवोत्पन्नं तदेव समष्टिरित्युच्यते। समष्टित्वं नामगोत्वादिवत् सर्वव्यष्टिष्वनुस्यूतत्वम्। तदुक्तम्—

"तेभ्यः समभवत्सूत्रं लिंगं सर्वात्मकं महत्" इति। एतदुपहितं चैतन्यं सर्वत्रानुस्यूतत्वात् सूत्रात्मेति। ज्ञानशक्तिमदंन्तःकरणोपहितत्वाद् हिरण्यगर्भ इति। क्रियाशक्तिमदधिदैवतप्राणरूपत्वात् प्राण इति चोच्यते। अस्यैषा समष्टिः स्थूलप्रपंचापेक्षया सूक्ष्मत्वात् सूक्ष्मशरीरं जाग्रद्वासनामयत्वात्स्वप्न इति कीर्त्यते।

व्यष्टित्वञ्च व्यक्तिवद् व्यावृत्तित्वम्। एतदुपहितचैतन्यं तेजोमयान्तःकरणोपहितत्वात्तैजस इति कथ्यते। अस्यापीयं व्यष्टिः स्थूलदेहापेक्षया सूक्ष्मत्वात् सूक्ष्मशरीरं जाग्रद्वासनामयत्वात्स्वप्न इति चोच्यते।

सत्त्वेनासत्त्वेन च विचारासहत्वे सति सदसत्त्वाभ्यां विचारासहं ज्ञानबाध्यं भावरूपं त्रिगुणात्मकमज्ञानं तदेव जीवेशावाभासेन करोति, माया चाविद्या च भवतीति श्रुतौ मायादिशब्देनाभिधीयते। तत्र शुद्धसत्त्वप्रधानं सन्मायेत्युच्यते। मलिनसत्त्वप्रधानं सदविद्येति कथ्यते। सा चाविद्याभीष्टदर्शनलाभ भोगजन्यैः प्रियमोदप्रमोदाख्यैः सुख विशेषैसहिता सती आनन्दप्रचुरत्वादानन्दमयो बन्धनहेतुत्वात्कोशः स्थूल-

सूक्ष्मशरीरकारणत्वात्कारणशरीरं स्वप्नजाग्रदुपरतत्वात् सुषुप्तिः स्थूलसूक्ष्मलयस्थानमिति चोच्यते ।

तदुपहितचैतन्यं प्राज्ञ इत्युच्यते । रजस्तमोभ्यामभिभूत सत्त्वप्रधानाविद्योपाधिकत्वेनानतिप्रकाशकत्वेन प्रकर्षेण ज्ञः प्रज्ञः प्राज्ञ इति निर्वचनात् । प्रकर्षेण बाह्यान्तःकरणवृन्दं विनापि जानातिति प्रज्ञः प्रज्ञ एव प्राज्ञ इत्यपि केचित् । स च तदा चिद्दीप्ताभिः सुखाज्ञानतत्साक्षात्काराभिः सूक्ष्माभिरज्ञानवृत्तिभिस्तान्यनुभवति । सुषुप्तिकाले सकले विलीने तमोऽभिभूतः सुखरूपमेति "आनन्दभुक् चेतोमुखः प्राज्ञः" इत्यादिश्रुतेः । सुखमहमस्वाप्सं न किञ्चिदवेदिषमित्युत्थितस्य परामर्शोपपत्तेश्च । नचायं दुःखाभाववानणुभवासंभवेन तत्परामर्शायोगात् । पराक्रान्तञ्चात्र सूरिभिरित्युपरम्यते ।

शुद्धसत्त्वप्रधानमायोपहितं चैतन्यं सर्वज्ञत्वसर्वेश्वरत्वसर्वनियन्तृत्वसत्त्वसत्यसंकल्पत्वापहृतपाप्मत्वाद्यनन्तकल्याणगुणाश्रयं सदव्यक्तमन्तर्यामी जगतामभिन्ननिमित्तोपादानं महेश्वर इति चोच्यते । "यतः सर्वज्ञः सर्ववित् एष त आत्मान्तर्याम्यमृतः महतः परमव्यक्तं यतो वा इमानि स महेश्वरः मायिनन्तु महेश्वरमित्यादिश्रुतेः ।

एतयोः प्राज्ञेश्वरयोरैक्यं वृक्षप्रकम्पनन्यायादौ सविस्तरं प्रतिपादयिष्यामः । कोशानामनात्मत्वे तु पूर्वोक्ता एव युक्तयोऽनुसन्धेयाः । सघाता नात्मत्वमपीन्द्रियवृन्दानात्मत्ववन्निश्चेयमित्यलमतिप्रपञ्चेन । एवं क्रमेण स्त्र्यादिविषयेभ्यो निवर्तकमपि शास्त्रमस्योदाहरणम् । तथा हि—

रागात्सर्वत्र मैथुनादिप्राप्तौ तावत्पशुमविवाहिताञ्च स्त्रीं निषिध्याधनस्यविवाहञ्च निषिध्य विवाहितायामपि समागमं क्रमेण दिने ऋत्वतिरिक्तकाले पर्वसु च निषिध्य तासु दोषदृष्ट्युत्पादनेन विरतिमुत्पाद्य च यदहरेव विरज्येत तदहरेव प्रव्रजेत्, यतो यतो निश्चरति मन इत्यादिना सर्वत्याजनपुरस्सरं परे तत्त्वे निवेशयति धियं शास्त्रमितिदिक् ।

इति स्थूलारुन्धतीन्यायः ।

अत्रादित आरभ्यैतावद्ग्रन्थस्य सन्दर्भे यथायोग्यस्थले प्रसंगात्पठिताः सप्तविंशतिर्न्यायाः । तेऽधुना पाठक्रमेणैव लिख्यन्ते न तु संगत्याः । सङ्गतिस्तूदाहृतस्यारुन्धतीन्यायस्यानुपदमुदाहरिष्यमाणभिक्षुपादप्रसारणन्यायेनातिदेशसंगतिः । प्रसंगात्पठितेष्वपि येन केनचिन्न्यायेनान्यस्य यस्य कस्यचिन्न्यायस्य काचित्संगतिर्भविष्यति तमपि तत्र लिखिष्यामः । तेषां व्याख्यानञ्चार्थमात्रं वदिष्याम इत्यादि पूर्वोक्त प्रतिज्ञानुसारेणेति ज्ञेयम् । इयमेव रीतिः प्रसंगादागतेषु न्यायेषु सर्वत्र बोध्या ।

यत्परः शब्दः स शब्दार्थ इति योऽर्थः परः तात्पर्यः विषयो यस्य सः तत्परः यद्विषयकतात्पर्यवानित्यर्थः । अन्यत्स्पष्टम् । उदाहरणं तु तत्स्थलीयमेव बोध्यम् ।

एवमग्रेऽपि कण्ठचामीकरः न्यायः। चामीकरो भूषणविशेषो स हि कण्ठगतोऽपि विस्मृतं सन्नप्राप्त इव भवति। आप्तोपदेशादिना ज्ञातः सन् प्राप्त इत्युपचर्यते। न तु वस्तुतो ज्ञानातिरिक्ता तस्य प्राप्तिरस्ति प्राप्तत्वादिति।

"अक्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्" इति न्यायः। अक्के गृहकोणे इत्यर्थः। अर्क इति पाठेऽप्ययमेवार्थः निगदव्याख्यातमन्यत्।

"सावकाशनिरवकाशयोर्निरवकाशं बलीयः" इति न्यायः।

"सम्भवत्येकवाक्यत्वे वाक्यभेदो हि नेष्यते" इति न्यायः अत्र हिशब्दः पश्य मृगो धावतीत्यादावेतदर्थप्रसिद्धेर्द्योतकः।

"मज्जनोन्मज्जनन्यायः"।

नद्यादौ पतितस्तरणानभिज्ञः कदाचिन्मज्जति कदाचिदुन्मज्जति इति प्रसिद्धं लोके। यद्धि तत्र पतितः सोऽन्यदवलम्बनमलभमानो व्याकुलचित्तः कुशकाशादीनवलम्बते। तत् "कुशकाशावलम्बनं" नाम तस्य न्यायः कुशकाशावलम्बनन्यायः। अनेन हि प्रबलासु युक्तिषु निराकृतास्वतिनिर्बला युक्तीरवलम्बमानः प्रतिवाद्यलमनेन कुशकाशावलम्बनेनेति निराक्रियते।

यथा पङ्कलिप्तास्तुम्बिका नदीसमुद्रादौ मज्जन्ती पङ्के क्षीणेऽवकाश आगत्य तिष्ठति तथा जीवो देहादिपङ्के क्षीणे अलोकाकाशे गत्वा तिष्ठति अयमेव तस्य मोक्ष इति दिगम्बरा इति "जलतुम्बिकान्यायः। तदेकदेशिनस्तु पञ्जरमुक्तपक्षिन्यायेन सन्ततमूर्द्ध्वंगमनमेव तस्य मोक्षं मन्यन्ते।

विक्षेपबहुलं धावनमेव परमपुरुषार्थं मन्यमाना बालैरप्युपहसनीया इत्यलमुन्मत्तवचसिकाव्यदूषणोद्भावनेनेति न्यायित्त नेह ते निराक्रियन्ते।

जीवः स्वाविद्याकामकर्मभिर्देहान्तरं निष्पाद्यैव पूर्वदेहं त्यजतीति विवक्षायां तृणजलौकान्यायः। यथा जलौका तृणान्तरमाश्रित्यैव पूर्वमाश्रितं तृणं त्यजति तद्वदित्यर्थः।

एकसम्बन्धिदर्शनमपरसम्बन्धिस्मारकमिति न्यायेन मज्जनोन्मज्जनन्यायादनन्तरा न्यायाः स्मृत्वोदाहृताः। यथा हस्तिपकदर्शनं हस्तिस्मारकं तथा नद्यादिज्ञानस्य कुशकाशजलतुम्बिकाजलौकानां तत्सम्बधिनां स्मरणहेतुत्वम्। अवशिष्टन्यायद्वयमध्येऽपि पञ्जरमुक्तेत्यस्य तथैव द्विपस्याक्षेपसङ्गत्योदाहृतिः। "एकवाक्यतापन्नानां सम्भूयैकार्थप्रतिपादकत्वम्" इति न्यायः सम्भूय मिलित्वेत्यर्थः।

"स्थूणानिखनन न्यायः"। यथा स्थूणायाः पुनः पुनः करेण चालनं कृत्वा मुद्गरादिप्रहारैर्निखननं भूमावधस्तान्नयनं चेत् क्रियते तदा सा दृढा भवतिति प्रसिद्धम्। तथोत्तरग्रन्थेन प्रागुपपादितार्थदार्ढ्यं भवितेत्यर्थः।

"सिंहावलोकनन्यायः" सिंहो यथा कथञ्चिन्मृगं हत्वाऽग्रेगच्छन्नन्योऽपि कश्चिन्मृगश्चैत्स्यात्तदा तमपि हन्यामितिवुद्धया पृष्ठदेशावलोकनं करोति हन्ति च दृष्टिपथमागतं मृगादिकमिति प्रसिद्धं लोके। तथा वुद्धिपथागतस्वपक्षद्वेषिपरपरिकल्पितकुतर्कान्तरनिरासायोत्तरग्रन्थप्रवृत्तिरित्यर्थः।

"स्वामिभृत्यन्यायः"।

बहुवृकाकृष्टमृगन्यायः"।

बहुराजकपुरन्यायः"।

वरगोष्ठीन्यायः।

गोष्ठी अन्योन्यवार्ता। वराय वरलाभाय गोष्ठी वरगोष्ठी। वरवधूवन्धूनामन्योन्यगोष्ठया ऐकमत्ये सति वरलाभरूपमेकं कार्यं निष्पाद्यते इति प्रथितम्।

"परिषदेष्वेकस्मिन् मृतेऽप्यवशिष्टैरेव परिषत्कार्यनिर्वाह न्यायः"

"न्यान्यदृष्टं स्मरत्यन्यः" इति न्यायः।

मुञ्जादिषीकोद्धरणन्यायः"।

मुञ्जदेतन्नामकतृणविशेषादित्यर्थः इषीकागर्भस्थं कोमलं तृणं वहिरावरकतया स्थितानां स्थूलतृणानां मुञ्जाख्यानां विभजनेन समुद्ध्रियते यथा तथा प्रकृतेऽपीत्यर्थः।

"गडुलिकाप्रवाहन्यायः।

गडुलिकानामवीनां समुदायादेका चेत् कूपे पतिता तदा वार्यमाणा अपि सर्वास्तत्र पतन्तीति प्रसिद्धम्। एतत्सदृश एव।

"अन्धपरम्परान्यायः"।

सोऽपि ह्यूर्ध्वमुख्यानवस्थल एवोदाह्रियते। यथा स्वभावकुटिलान्धपङ्क्तौ यत्रादिमः स्खलति न वदति चान्यं तत्र क्रमेण सर्वे स्खलन्ति तथा प्रकृतेऽपि।

"मल्लग्रामन्यायः"।

ग्रामेऽन्येषु जनेषु वसत्स्वपि मल्लानां बहुत्वान्मल्लग्राम इत्युच्यते। एतेन "ब्राह्मणग्रामः" "आम्रवनम्" इत्यादयोऽपि न्याया व्याख्याताः।

"न हि त्रिपुत्रो द्विपुत्र इति कथ्यते" इति न्यायः।

"देवदत्तापुत्रन्यायः"।

न हि देवदत्ताया एव पुत्रो भवति किन्तु देवदत्तस्यापि तथापि मातुः प्राधान्यविवक्षया देवदत्तापुत्र इत्युच्यते। पितुः प्राधान्यविवक्षायां तु देवदत्तपुत्रन्यायेनेत्युदाह्रियते। इमौ व्यवहारौ क्रमेण मातामहपितामहगृहयोर्बोध्यौ अत्रैव "प्रासादवासिन्यायः" अप्यवतरति। एकं एव देवदत्तः प्रासादोपर्यधस्ताच्च कालभेदेन वसन्नपि प्रासदप्राधान्येन प्रासादवासीत्युच्यते।

"कार्येण कारणसंप्रत्ययः" इति न्यायः।

इदं धूम वह्न्यादौ प्रसिद्धम्। एवं "व्यापक व्यावृत्या" इत्याद्यपि।

"न हि दृष्टेऽनुपपन्नम्" इति न्यायः।

"न हि करकङ्कणदर्शनायादर्शापेक्षा" इति न्यायोऽप्येतस्मिन् विषये प्रवर्तते।

"व्यापकव्यावृत्त्या व्याप्यव्यावृत्तिः" इति न्यायः।

"तद्धेतोरेव तदस्तु किन्तेन" इति न्यायः।

तस्य कपालादेर्हेतोर्मृदादेरेव तद्घटादिकारणत्वमस्तु किन्तेनान्तर्गडुना कपालादिरूपकार्येणेत्यर्थः।

"कारणगुणप्रक्रमन्यायः"।

कारणगुणाः कार्ये स्वजातीयगुणानारभन्ते। यथा तन्तुरूपादयः पटगतरूपादीनिति न्यायार्थः।

"पञ्जरचालनन्यायः"।

यथा दशभिः पक्षिभिः स्वयत्नैरेकां पञ्जरे क्रियामुत्पाद्य तस्य चालनं तिर्यगूर्ध्वनयनं क्रियते, तथा दशभिरिन्द्रियैरेकां प्राणरूपां क्रियामुत्पाद्य देवचालनं क्रियातामित्यर्थः। अयं च न वायुक्रिये इत्यधिकरणपूर्वपक्षन्यायः।

"क्रिया हि विकल्प्यते न वस्तु" इति न्यायः।

अनुक्रान्ताः प्रसङ्गात्पठितास्तैः सङ्गताश्च न्यायाः। अथ प्रकृतमनुसरामः।

स्थूलारुन्धतीन्यायव्याख्यानेन भिक्षुपादप्रसारणन्यायोऽपि व्याख्यातप्रायः। विषयोदाहरणयोः समानत्वात्। न्यायार्थप्रकृतसङ्गती तु यथा कश्चिद् भिक्षुर्यथेष्टभोजनाच्छादनवासगृहादिलाभार्थं कस्यचिद् महाधनाख्यस्य वेश्मनि प्रविष्टः सन् युगपत्सर्वस्वाभीष्टलाभं दुर्लभं मन्यमानः प्रथमस्य गृहे मे पादप्रसारस्तु भवतु पश्चादनेन सम्यक् परिचयं सम्पाद्य क्रमेण सर्वं स्वाभीष्टं साधयिष्यामीति बुद्ध्या स्वल्पामपि भिक्षां स्वीकरोति। यथा मुमुक्षोर्जीवस्य मातेव परमहितैषिणी श्रुतिरद्वैततत्त्वे अस्य बुद्धेः प्रवेशमिच्छन्ती सकृत्तमशक्यं च मन्यमाना पूर्वोक्तक्रमे संसारमुक्तये तद् बोधयतीत्येवं बोध्ये अस्मिन्नेव विषये सोपानारोहणन्यायोऽपि बोध्यः। यथा प्रासादमारोढुकामः कश्चिद् युगपदारोढुमशक्नुवन् पूर्वां पूर्वां कक्षां परित्यजन् उत्तरामुत्तराञ्च कक्षामारोहन् क्रमेण प्रासादमारोहति तथा स्वस्वरूपभूतमपि ब्रह्माज्ञानेन व्यवहितमिवापन्नमात्मत्वेन ज्ञातुकामो मुमुक्षुः सहसा ज्ञातुमशक्नुवन् पुत्रादारभ्यानन्दमयान्तेषूत्तरस्मिन्नुत्तरस्मिन् आत्मत्वबुद्ध्या पूर्वेषु पूर्वेषु आत्मत्वबुद्धित्यागे कृते सति क्रमेण प्रपञ्चोपशमं शिवमद्वैतं चतुर्थमात्मत्वेन जानातीति।

तस्माद्वा एतस्मादात्मनः आकाशस्सम्भूत इत्यादावध्यारोपे यस्माद्यस्योत्पत्तिरुक्ता तदतिरेकेण तदभावो यत्र संभाव्यते तस्मिंस्तस्य लयो वा प्रतिपाद्यते तत्र

सोपानावरोहणन्यायोऽवतरति। यथा हि येन क्रमेण सोपानमारोहन्ति तद्विपरीतक्रमेण ततोऽवरोहन्तीति लोके प्रसिद्धम्। तथा पूर्वोक्तपञ्चकोशावतरणन्यायेनाद्वैततत्त्वे बुद्धिमारोहयितुमशक्तो भोग्यभोगायतनतदाश्रयचतुर्दशभुवनतदाधारब्रह्माण्डानि पञ्चीकृतपञ्चभूतमात्राणि न तेभ्योऽतिरिच्यते इति संभावयेत्। पञ्चीकृतानि भूतानि सूक्ष्मशरीराणि चापञ्चीकृतभूतेभ्यो नातिरिच्यन्त इति जानीयात्।

एवं गन्धतन्मात्रात्मिकां पृथिवीं रसतन्मात्रात्मिकामात्रत्वेन भावयेत्। अपश्च रूपतन्मात्रात्मकतेजोमात्रत्वेन। तच्च तेजः स्पर्शतन्मात्रात्मक वायुमात्रत्वेन, तञ्च वायुं शब्दतन्मात्रात्मकाकाशमात्रत्वेन, तञ्चाकाशं स्वकारणभूतमायोपहितमहेश्वरमात्रत्वेन भावयेदिति।

एवञ्च यथा पूर्वोक्तक्रमेणावरोहणात्सुखेन भूमिं प्राप्नोति तथैवानेन क्रमेण भावनात्सुखेनभूमानमद्वितीयं शिवमाप्नोतीति प्रलयोऽप्यनेनैव क्रमेण भवतीति बोध्यम्। साक्षात् प्रकृतौ विकारलय इति न्यायात् तथा च स्मर्यते—

जगत्प्रतिष्ठा देवर्षे पृथिव्यप्सु प्रलीयते।
ज्योतिष्यापः प्रलीयन्ते ज्योतिर्वायौ प्रलीयते॥
वायुश्च लीयते व्योम्नि तच्चाव्यक्ते प्रलीयते।
अव्यक्तं पुरुषे ब्रह्मन्निष्कले संप्रलीयते॥ इति।

वार्तिककारैर्विश्वादीनामपि विलायनक्रम उक्तः।—

अकारं पुरुषं विश्वमुकारे प्रविलापयेत्।
उकारं तैजसं सूक्ष्मं मकारे प्रविलापयेत्॥
मकारं कारणं प्राज्ञश्चिदात्मनि विलापयेत्॥ इति।

अत्र तदतिरेकेण तदभावभावनैव तस्य तत्र विलापनं नाम। अत्र यद्यपि माण्डूक्यश्रुतौ नान्तःप्रज्ञं न बहिःप्रज्ञं नोभयतः प्रज्ञं न प्रज्ञं नाप्रज्ञं न प्रज्ञानघनमिति तैजसादेर्विश्वादेर्जाग्रत्स्वप्नान्तरालावस्थायाः प्राज्ञादेश्च तुर्यपादे एवानिषिध्यमानत्वात्तत्रैव प्रविलापनमित्यक्षरात्प्रतीयते तथापि मात्रापादैक्यकल्पनस्य दृष्टार्थत्वानुरोधादकारः पीड्यमानः सन्नुकारं प्रतिपद्यत इत्यादि स्मृत्यनुरोधादुक्तवार्तिकानुसाराच्च मात्राक्रमेणैव प्रविलापने श्रुतेस्तात्पर्यमिति बोध्यम्। एषामनेनैव क्रमेण प्रलय—उपाधिलयप्रयुक्तो लयोऽपि बोध्यः।

चिदात्मनोऽपि कुत्रचिद् विलापनं लयश्च स्यादितिशङ्कां वारयतिश्रुतिः—

पुरुषान्न परं किञ्चित्साकाष्ठा सा परागतिः। इति।

इति सोपानावरोहणन्यायः।

साक्षात्प्रकृताविति न्यायोऽत्र प्रासङ्गिकः।

घटादीनां हि लयः कपालादावेव भवति न तु परमाणुषु तथैवानुभवादिति तदर्थः। एतेन "अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते" इति न्यायोऽपि व्याख्यातः।

आद्यन्यायत्रयेऽध्यारोपस्य चतुर्थेऽपवादस्य च प्रतिपादनात्, तत्राध्यारोपो नाम वस्तुन्यवस्त्वारोपः। यथा हि अरजतभूतायां शुक्तौ रजतारोपः।

न च कथमवस्तुनो निरात्मकस्यारोपः क्वचिद् दृष्टपूर्वस्य सतः क्वचिदारोपदर्शनादितिमन्तव्यम्, संस्कारजन्यो हि भ्रमः तत्सिद्धयेऽनुभवमात्रमपेक्षते न तु पूर्वमनुभूतस्य तात्त्विकमपि व्यतिरेकाभावात्। सन्दिग्धविपर्यस्तेष्वप्यत्र स्थाणौ मे नरो वा राक्षसो वेति सन्देह आसीत्, अस्यां रज्जौ सर्पोऽयमिति विपर्यय आसीदित्यादि संस्कारकार्यस्मृतिदर्शनात्।

न च सन्देहविपर्यययोरेवेयं स्मृतिर्न तदर्थयोरिति शङ्क्यम्, अर्थविरहिणोस्तयोः स्मृतिगोचरत्वायोगात्। तस्मात्तुच्छेतरस्य पूर्वपूर्वभ्रमानुभूतस्याप्युत्तरोत्तरोपपत्तेः। भ्रमप्रवाहस्य च बीजाङ्कुरप्रवाहन्यायेनानादितयाऽन्योन्याश्रयानवस्थादिप्रसङ्गानवकाशात्।

तथा च परमार्थे सति वस्तुन्यवस्तुनो निर्वचनीयस्यारोप उपपद्यतेतराम्। तत्र वस्तुसच्चिदानन्दाद्वयं ब्रह्म अज्ञानादिसर्वाचेतननिचयो वास्तु। न च ब्रह्मण एव वस्तुत्वे जीवस्य स्थाण्वादेश्चावस्तुत्वात् कर्तृत्वाद्यध्यासे पुरुषाद्यध्यासे चाव्याप्तिरिति शङ्क्यम्। ब्रह्मण्येव जीवत्वस्याप्यध्यस्तत्वात्। कर्तृत्वादेश्च सोपाधिकभ्रमत्वेनोपाध्यनुरक्ते ब्रह्मण्येवाध्यासात्। स्थाण्वादेस्तु पुरुषाद्यधिष्ठानचैतन्यावच्छेदकतयाऽधिष्ठानत्वमुपचर्यते न तु वस्तुतोऽस्ति। अज्ञातं हि वस्त्वधिष्ठाने न च स्थाण्वादेरज्ञातत्वमस्ति, जडत्वात्, जडस्य च स्वतः आवृतत्वेन तत्राज्ञानकृत्याभावात्, तत्कार्यतया तदाश्रयविषयत्वायोगाच्च। चिन्मात्राश्रयविषयमेव ह्यज्ञानम्। तदुक्तं संक्षेपशारीरके—

आश्रयत्वविषयत्वभागिनी,<br>
निर्विभागचितिरेव केवला।<br>
पूर्वसिद्धतमसो हि पश्चिमो,<br>
नाश्रयो भवति नापि गोचरः ॥इति।

अन्यत्र चोक्तम्—

यस्याज्ञानं भ्रमस्तस्य भ्रान्तः सम्यक् च वेत्ति सः।<br>
जडं न विद्याद्वेद्यत्वान्नातो ज्ञानं जडाश्रयम् ॥इति।

एवञ्च सत्यस्य वस्तुनो मिथ्यावस्तुतादात्म्यावभासोऽध्यास इति सिद्धम्। एतेन चिज्जडयोरन्योन्यतादात्म्याध्यासे शून्यमेव जगत्तत्वं स्यादारोपितस्य मिथ्यात्वादिति निरस्तम्। भ्रमे भासमानस्य तत्त्वेऽप्यभासमानांशस्य सत्यतया बाधाऽयोग्यत्वेन सर्वशून्यताप्रसङ्गाभावात्।

तदप्युक्तं संक्षेपशारीरके—

अध्यस्तमेव हि परिस्फुरति भ्रमेषु,
नान्यत्कथञ्च परिस्फुरति भ्रमेषु।
रज्जुत्वशुक्तिशकलत्वमरुक्षितित्व-
चन्द्रैकताप्रभृतिकानुपलम्भनेन ॥इति।
किञ्चानृतद्वयमिहाध्यसनीयमिष्टं
स्याच्चेत्तदा भवति चोद्यमिदं त्वदीयम्।

सत्यानृतात्मकमिदं मिथुनं मिथश्चै—
दध्यस्यते किमितिशून्यकथाप्रसङ्गः ॥इति च।

तस्माद् युक्तमुक्तं वस्तु सच्चिदानन्दाद्वयं ब्रह्म तस्मिन् स विलापाबोधस्या-वस्तुनोऽध्यारोप इति। अपवादस्तु अधिष्ठाने भ्रान्त्या प्रतीतस्य तदतिरेकेणाभाव-निश्चयः। यथा स्थाण्वादौ भ्रान्त्या प्रतीतस्य पुरुषादेः स्थाण्वाद्यतिरेकेणाभावनिश्चयः। अयमेव बाधो विलापनमिति चोच्यते।

स च बाधस्त्रिविधः। श्रौतो यौक्तिकः प्रत्यक्षश्चेति। नेति नेति, नेह नानास्ति किञ्चनेत्यादिश्रुतेर्ब्रह्मातिरिक्ततदभावनिश्चयः श्रौतो बाधः। कनकाद्यतिरेकेण कटकाद्यभावनिश्चयवन्निखिलकारणीभूतब्रह्मातिरेकेण निखिलप्रपञ्चाभावं निर्धार्य दृश्यमानस्य मिथ्यात्वनिर्धारणेनावशिष्टप्रत्यगभिन्नब्रह्ममात्रनिश्चयो यौक्तिको बाधः। तत्क्रमश्च सोपानावरोहणन्याये निरूपितः। तत्त्वमस्यादिवाक्यजेन "चिन्मात्रोऽहं सदा शिवः" इति साक्षात्कारेण प्रविलापाज्ञानोपशमः प्रत्यक्षबाध इत्यलमतिप्रपञ्चेन इत्यध्यारोपवाद न्यायः। अत्र प्रसङ्गाल्लिखितो वीजाङ्कुरप्रवाहन्यायः स्पष्टः।

यत्रैकस्यैव वस्तुनो मतभेदेन बहूनि रूपाणि तत्तच्छास्त्रेषु प्रतिपाद्यमानान्युपलभ्य वस्तुनि विकल्पासंभवं च मत्वा विरुद्धानां समुच्चयस्याप्यसंभवेन तेषामविरोध-चिकीर्षया तेष्वेवैकमतप्रतिपादितं सर्वाविरुद्धं वस्तु स्वीक्रियते तत्र "वृक्षप्रकम्पन न्यायः" प्रवर्तते।

यथा वृक्षमारूढः पुमानधः स्थितैर्नरैः प्रथममियं शाखा प्रकम्पितव्या प्रथममियं शाखा प्रकम्पितव्येति भिन्नभिन्नशाखाप्रकम्पने नियोजितः तदधःस्थेनैव च केनचित्सर्ववृक्षप्रकम्पने नियोजितः सर्वैः प्रथमप्रकम्पनस्याज्ञप्तत्वेन यौगपद्यासंभवेन क्रमविकल्पोपगमेऽपि सर्वाविरोधासिद्धेः तच्चिकीर्षया वृक्षं प्रकम्पयति तत्प्रकम्पनेन हि सर्वाः शाखा अपि प्रकम्पिताः स्युरिति भवति सर्वैरविरोधः।

तथा योगादारभ्याखवंथाद्यन्तेशवादिभिरविरोधायौपनिषदाभिमतो महेश्वरोऽ-भ्युपगन्तव्योवीतरागैर्मुमुक्षुभिः।

ननु के तत्तदभिमता ईश्वराः, कश्चौपनिषदाभिमतः स कथं तदुपगमेन सर्वं रविरोध इति चेन्नूनं मेधाव्यसि श्रृणु तावद् योगाभिमतमीश्वरम् ।

"क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेषः ईश्वरः" सोऽपि जीववसङ्गश्चिद्रुपश्च परश्च जीवेभ्यस्तन्नियन्तृत्वात् "प्रधानक्षेत्रज्ञपतिर्गुणेशः" इति श्रुतेः ।

ननु नियन्तृत्वं नाम तत्तत्कर्मकारयितृत्वं तच्चासङ्गस्यानुपपन्नम्, यः कारयति स करोत्येवेति न्यायेन कर्तृत्वस्य दुर्निवारत्वात् । दृश्यते हि योधयितृषु नृपतिषु दानमानादिकर्तृत्वं स्वयं योद्धृत्वं चेति चेन्न, लोहचुम्बकन्यायेनातुरसङ्गस्यापि प्रेरकत्वोपपत्तेः ।

न चासङ्गस्यास्य नियन्तृत्वं निष्प्रमाणकम् । "भीषाऽस्माद् वातः पवते" इत्यादि श्रुतिसिद्धत्वात् । बन्धमोक्षव्यवस्था पृथिव्याद्यवस्थित्यन्यथानुपपत्तिसिद्धत्वाच्च । जीवधर्मक्लेशादिरहितत्वादुपपन्नं च नियन्तृत्वमीशस्य ।

न च भवन्मते जीवा अप्यसङ्गाश्चिद्रूपाः क्लेशादिरहिता एव तथा चेश्वरे को विशेष इति वाच्यम्, जीवानां स्वतः क्लेशादिरहितत्वेऽपि बुद्धया सह विवेकाग्रहेण क्लेशकर्मविपाकाशयानां सत्त्वाङ्गीकारात् । अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः । तत्राविद्या चतुर्विधा । अनित्ये कर्मफले ब्रह्मलोकादौ नित्यत्वबुद्धिरेका ।

ननु "शोकं हित्वा तस्मिन् वसति शाश्वतीः समाः" इत्यादि श्रुत्या ब्रह्मलोकस्य नित्यताप्रतिपादनात् कथमनित्यत्वम् । न च तस्य कृष्यादिवत्कर्मसाध्यतया "अन्तवत्तु फलं तेषाम्" इत्यादिस्मृत्या तद्येह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते इत्यादि श्रुत्या चानित्यता प्रतीयते इति शङ्क्यम्, उपासनाविधेरप्रामाण्यापत्तेः ।

यथा स्वर्गादावनित्यत्वदोषदर्शनेन स्वर्गतत्साधनेच्छानिवृत्त्या प्रवृत्तिनिरोधेन नित्यफलोद्देश्येन तत्साधनेऽप्रवृत्तिः तथा ब्रह्मलोकादावनित्यत्वदोषदर्शनेन तदुद्देश्येन तत्साधनानुष्ठाने प्रवृत्तिनिरोधात्सर्वेषामन्यत्र प्रवृत्तिप्रसक्त्योपासनाविधायिशास्त्राणामप्रामाण्यं प्रसज्येत । न च तदिष्टं सत्यलोकान्यनित्यफले मानाभावात् । अत्रापि दोषदर्शनेन प्रवृत्तिनिरोधात् सन्दिहानः सर्वोऽपि लोकोऽनर्थं प्राप्नुयात्, मोक्षशास्त्रं सर्वमनर्थकं प्रसज्येत ।

अतः केवलकर्मसाध्यस्यानित्यत्वेऽपि यथोक्तागमप्रामाण्याद् विद्याकर्मसमुच्चयसाध्यस्य सत्यलोकस्य नित्यतोपेया । तथा च श्रुत्यन्तरविरोधदनित्यताबोधकश्रुतिस्मृतीइतरविषये व्याख्येये इति ब्रह्मलोकस्यानित्यत्वोक्तिरयुक्तैवेति चेदुच्यते—नित्यत्वबोधकश्रुतेरर्थवादत्वाद् ब्रह्मलोकोऽनित्य एव, उपासनाविधिस्तु फलमात्रमपेक्षते न तु तन्नित्यत्वमपि । इतरथा स्वर्गादिसाधनविधेरपि तथात्वेन कर्मफलानां तारतम्याभावप्रङ्गेन नाग्निहोत्रकर्तुरुत्तरकर्मसूपासनायाञ्च प्रवृत्तिः स्यात् ।

ननु ब्रह्मलोकस्यानित्यत्वावगमे तत्साधनोपासनायामप्रवृत्तेस्तद्विधायकागमस्याप्रामाण्यापत्तिरिति चेन्न, कर्मविधायकस्यागमस्यापि तथात्वापत्तेः।

अथ कर्मफलानित्यत्वबोधेऽपि रागवशात् प्रवृत्तिसंभवान्न कर्मकाण्डाप्रामाण्यमिति चेत्तर्हि न स प्रकृतेऽपि दण्डवारितः। अपि च "तद्यथेह कर्मचितः" इत्यादिश्रुतेः श्रवणादिविध्यपेक्षिततया भूतार्थवादतया स्वर्गार्थवादवत् स्वार्थे प्रामाण्यसंभवात्पुण्यकार्यस्य ब्रह्मलोकान्तस्यानित्यतैव।

यत्तु ब्रह्मलोकस्य विद्याफलत्वेन कर्मफलवैलक्षण्यान्नित्यतेति, तत्र तत्त्वविद्याया अष्टाङ्गयोगजन्यायाः प्रकृतिपुरुषान्यताख्यातिरूपायाः कैवल्यसाधकत्वेनातत्साधनत्वात्। उपासनायास्तु मानसक्रियारूपत्वेन पुण्यान्तरभूततया तत्साध्यस्य ब्रह्मलोकस्यानित्यत्वमावश्यकम्।

अपि च तद्यथा पेशस्कारी पेशसो मात्रामुपादायान्यन्नवतरं कल्याणतरं रूपं तनुते, एवमेवायमात्मेदं शरीरं निहत्याविद्यां गमयित्वाऽन्यन्नवतरं रूपं कुरुते पित्र्यं वा गान्धर्वं वा दैवं वा प्राजापत्यं वा ब्राह्मं वेत्यादिना। ब्रह्मलोकान्तस्य कर्मसाध्यत्वेन संसृतिविषयत्वमभिधाय अथाकामयमानेत्यारभ्यब्रह्माप्येतीत्यन्तेन संसारास्पृष्टमविद्या कामकर्मातीतं ब्रह्मसमभावाप्तिलक्षणं मोक्षं नित्यफलं दर्शयति निरञ्जनः।

परमं साम्यमुपैतीति श्रुत्यन्तरैकवाक्यतामापन्ना श्रुतिः तथा च तदन्यनित्यफले मानाभाव इत्युन्मत्तप्रलापः। अपि च यो भूमा तदमृतं यदल्पं तन्मर्त्यमतोऽन्यदार्तम्।

आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन।
मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते॥

इत्यादि श्रुतिस्मृतिभिर्ब्रह्मान्यस्यानित्यत्वप्रतिपादनात्। यत्कार्यं तदनित्यमिति व्याप्तया भावकार्यस्य सर्वस्यानित्यत्वप्रतीतेश्च ब्रह्मलोकस्यापि कर्मसाध्यत्वेन भावकार्यत्वाद् ब्रह्मान्यत्वाच्चानित्यत्वमावश्यकम्। तस्मात्पूर्णाहुत्या सर्वान् कामानवाप्नोतीति वचनस्य विध्यनपेक्षितत्वेनान्यकर्मविध्यानर्थक्यप्रसङ्गेन च गुणार्थवादत्ववदशोकमहिमित्यादिवाक्यानां विध्यनपेक्षिततया युक्तिशून्यतया च गुणार्थवादत्वात्। ब्रह्मलोकस्य श्रुतिस्मृतियुक्तिभिरनित्यतावगमाच्च। तत्र नित्यत्वधीरविद्येत्यनवद्यम्।

अशुचिषु स्वदेहपुत्रभार्यादिषु शुचित्वबुद्धिरपरा। अशुचित्वञ्च देहस्य सर्वेषामस्माकमनुभवसिद्धम्। सदा मलमूत्रादिपूर्णत्वावगमात्। सर्वानुभवमूलकम्,

बीजात्स्थानाद्युपष्टम्भान्निष्यन्दान्निधनादपि।
कायमाधेयशौचत्वात्पण्डिता ह्यशुचिं विदुः॥
नित्यमाचरतः शौचं कुर्वतः पितृतर्पणम्।
यस्य नास्ति हि वैराग्यं शास्त्रं तस्य करोति किम्॥

अमेध्यपूर्णं कृमिजालसंकुलं स्वभावदुर्गन्धमशौचमध्रुवम् ।
कलेवरं मूत्रपुरीषभाजनं रमन्ति मूर्खा विरमन्ति पण्डिताः ॥

इत्याद्यभियुक्तोक्तिसिद्धञ्च पुत्रभार्यादिहत्वाविशेषादशुचित्वं बोध्यम् । तथा च तेषु शुचित्वधीरविद्येति निरवद्यम् । दुःखतत्साधनेषु सुखतत्साधनबुद्धिरन्या । तदुक्तं भागवते—

विमोहितो यजत ईश मायया, त्वदीयया त्वां न भजत्यनर्थदृक् ।
सुखाय दुःखप्रभवेषु सज्जते, गृहेषु योषित्पुरुषश्च वञ्चितः ॥ इति ।

अनात्मसु देहेन्द्रियादिषु अहमित्यात्मधीरितरा । तदाह भगवान् पतञ्जलिः—

"अनित्याशुचिदुखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या" इति ।

अहङ्कारस्य सूक्ष्मावस्थाऽस्मिता । इदमेव महत्तत्त्वं सामान्याहङ्कार इति चोच्यते । इदं मे स्यादिदं मे स्यादिति जायमानोऽन्तःकरणवृत्तिविशेषो रागः, स चाभिलषितेऽर्थे प्राप्ते पुनरधिकार्थविषयकश्चित्तानुरञ्जनात्मकः सर्वानुभवसिद्धः द्वेषः क्रोधः इति केचित् । प्रतिकूलाचरणनिमित्तश्चेतनमात्रगोचरश्चित्तवृत्तिविशेषः क्रोधः, दुःखतत्साधनचेतनाचेतनगोचरः स द्वेष इत्येके ।

स्वीकृतस्य पुनस्त्यागासहिष्णुत्वमभिनिवेशः ।

कर्माणि चतुर्विधानि "कर्माशुक्लकृष्णंयोगिन स्त्रिविधमितरेषाम्" इति सूत्रितानि, तान्येव पुनः सञ्चितमागामि प्रारब्धं चेति प्रत्येकं त्रिविधानि । तत्र फलमदत्वाऽदृष्टरूपेण वर्तमानं सञ्चितम्, अस्मिन् देहे क्रियमाणं भाविदेहेषु फलप्रदमागामि, वर्तमानदेहारम्भकं प्रारब्धम् ।

तत्र सञ्चितागामिनोर्भोगेन विरोधिकर्मान्तरेण तत्त्वज्ञानेन वा नाशः । प्रारब्धस्य तु भोगेनैव नाशः । तदुक्तम्—

प्रारब्धं भोगतो नश्येच्छेषं ज्ञानेन दह्यते । इति ।

न च सञ्चितस्य कर्मणः प्रायश्चित्ततत्त्वज्ञानाभ्यां नाशोऽस्तु आगामिकर्मणः कथं नाशः स्यादिति शङ्क्यम्, तस्याऽप्यश्लेषसंभवेन फलाजनकतया नष्टप्रायत्वात्, तदाह भगवान् व्यासः—

"तदधिगमउत्तरपूर्वाद्ययोरश्लेषविनाशौ तद्व्यपदेशात्" इति । किं बहुना प्रारब्धातिरिक्तानां सर्वेषां क्लेशादीनां तत्त्वज्ञानेन नाशः ।

"ज्ञात्वा देवं मुच्यते सर्वपापैः" ।
"ज्ञात्वा देवं सर्वपापापहानिः" ।
"क्षीणैः क्लेशैर्जन्ममृत्युप्रहाणिः" इत्यादिश्रुतेः ।

"तद्विपाका जात्यायुर्भोगा" इत्युक्ताः कर्मविपाकाः फलविशेषाः तदाशयास्तेषां संस्कारास्ते क्लेशादयः संसारावस्थायां दुर्निवार्याः। ईश्वरस्तु सदा तैरसंस्पृष्ट इति तयोर्विशेषइति। एतेन सेश्वरसांख्यवादोऽपि व्याख्यातः।

एतत्तुल्ययोगक्षेमत्वात् तार्किकास्तु असङ्गस्य नियन्तृत्वमसहमाना नित्यबुद्धीच्छा कृतिमान् पुंविशेषईश्वरः। पुंविशेषत्वमप्यस्य बुद्ध्यादिगुणकत्वादेव नान्यथा। नित्य-ज्ञानादिमत्त्वादनित्यज्ञानादिमज्जीवेभ्यस्तद्वैलक्षण्यमपि सिध्यति। क्षित्यादि सक र्तृकं कार्यत्वादित्यनुमानं तत्र मानम्। स च लाघवादेकः सर्वत्र कार्योपलब्धेर्विभुश्च, क्षित्यादिसमवायिकारणसर्वसूक्ष्मदर्शित्वात् सर्वज्ञश्च। "सत्यकामः सत्यसंकल्पः यः सर्वज्ञः सर्वविद्" इत्याद्यागमोऽपि तत्र मानमित्याहुः।

यद्यप्यविद्याकामकर्माद्यभावाज्जन्यं सुखमीश्वरे न संभवति तथापि नित्य-सुखाङ्गीकारे बाधकाभावात्, "आनन्दं ब्रह्मणो विद्वान्" इत्यादिश्रुतेश्च नित्यसुखा-श्रयत्वमपीशस्यान्यत्सर्वं समानमिति तदेकदेशिनः।

नित्यबुद्धिचिकीर्षादिमत्त्वे सदा सर्गप्रसङ्गान्नित्यजिहीर्षादिमत्त्वे सदा प्रलया-पत्तेश्च न तार्किकाभिमत ईश्वरोऽङ्गीकार्यः, किन्तु लिङ्शरीरसमष्ट्युपहितो हिरण्यगर्भ ईशः।

न च शरीरयोगेन जीवत्वं शङ्कनीयम्, जीवत्वसमनियताविद्याद्यभावेन जीवत्वस्यासंभवात्। कथं तर्हि शरीरपरिग्रहः, लीलयैवेति गृहाण। न च तदीश्वरत्वे मानाभावः उद्गीथब्राह्मणस्य तत्र प्रमाणत्वादिति हैरण्यगर्भाः। स्थूलदेहमन्तरेण केवललिङ्गदेहस्यानुपलब्धेः स्थूलदेहसमष्ट्युपहितो विराडेवेश्वरोऽङ्गीकार्यः। स च सर्वतो मस्तकादिमान् "सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपाद्" इत्यादिश्रुतेः।

सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम्।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति॥ इत्यादिस्मृतेश्च।

अविद्याद्यभावाद् देहवत्त्वेऽपि न जीवत्वं तस्य देहपरिग्रहश्च पूर्ववल्लीलयैवेति विराडुपासकाः। विधातारमुपासीनास्तु—सर्वतः पाणिपादत्वं नेश्वरत्वप्रयोजकम्, अन्यथा कृमिविशेषस्य सहस्रपादादेरपीश्वरत्वप्रसङ्गात्।

तस्माद्वेतिहासपुराणादिसकलवाङ्मयशरीरया भगवत्या सरस्वत्या सदो-पासितः सत्यलोकाधिपतिश्चतुराननो ब्रह्मैव जगदीश्वरः।

यतो वेत्यादि सामान्यवाक्यानि अपि चतुर्धा करोति इति वाक्येन पुरोडाशचतुर्धा-करणवाक्यवत्प्रजापतिः प्रजाः सृजते "इत्यादि विशेषवाक्यबलेन तत्परतयैव नेयानि। स च रुद्रस्य स्वललाटादाविष्कर्ता विष्णोरपि दैत्यसंहारादिकार्यार्थं तत्तदवतारेषु जनकश्च। एवमन्येषामपि सुराणां महर्षीणामसुरादीनाञ्च तत्तदधिकारेषु प्रवर्तको जनकः संहर्ता च।

क्वचिद्विधेर्हरिहरादिस्तुत्यादौ प्रवृत्तिस्तु लोकसंग्रहाय। तत्स्तुतिश्च विधातुः स्वीयैव, तयोः स्वांशावतारत्वात्। अतस्तदुपासकानामपि ब्रह्मलोकप्राप्तिरेव भवति। ततः परस्य लोकान्तरस्य वेदेष्वदर्शनात्। तत्र गतानां च तेषां सैव तत्तद्भक्त्यनुसारेण शम्भुनारायणाकृतिर्भाति, तथा तल्लोकवासिनोऽपि चतुर्भुजाकारैर्विधीच्छयैव भासन्ते। एवञ्चेतिहासादिषु तत्तल्लोक प्रतिपादनंपूर्वंपूर्वंतत्तद्भक्तानुवादमात्रम्।

तथा च भविष्ये—

सृजत्येष जगत्कृत्स्नं पाति संहरते तथा।
रुद्रोऽस्य मनसो जातो विष्णुर्जातश्च वक्षसः॥
मुखेभ्यश्चतुरो वेदा वेदाङ्गानि कृत्स्नशः।
सर्वे ब्रह्ममया लोका सर्वे ब्रह्मणि संस्थिताः॥
तस्मात्समर्चयेद् ब्रह्म य इच्छेच्छ्रेय आत्मनः।
यो नैव पूजयेद् भक्त्या सुरज्येष्ठं सुरेश्वरम्।
न स नाकस्य राज्यस्य न च मोक्षस्य भाजनम्।
यस्तु पूजयते भक्त्या विरिञ्चिं भुवनेश्वरम्।
स नाकराज्यमोक्षेषु क्षिप्रं भवति भाजनम्॥
वरं देहपरित्यागो वरं नरकसंभवः।
नत्वेवापूज्य भुञ्जीत देवं वै पद्मसंभवम्॥ इति।

मात्स्ये च—विध्यनुगृहीततारकेण वधान्मुक्तानां विष्ण्वादीनां विधिशरणमापन्नानां तत्तन्नमस्कारस्तुत्यादिजन्यतत्प्रसादात्स्वपदप्राप्तिरुच्यमाना तत्सर्वोत्तमत्वं ज्ञापयति। एवं पुराणान्तरेष्वपि ज्ञेयमित्याहुः।

श्रीमद्भगवतो नारायणस्य नाभेरुद्भूतात्पद्मादुत्पन्नो हि प्रजापतिः। अतः श्रुत्यादिषु पद्मजत्वेन प्रसिद्धः, स चैतत्पद्मं क्व तिष्ठतीति तत्र स्थित एव विचारितवान् "सोऽपश्यत्पुष्करपर्णे तिष्ठन् वोऽमन्यत अस्ति चैतद् यस्मिन्निदमधितिष्ठति" इति श्रुतेः।

एवं विचार्य पदस्याधिष्ठानं तदेव मे मूलकारणमिति स्वमूलनिश्चयार्थं बहुकालं भ्रमन्नपि तन्नापश्यत् पश्चात्समाधियोगात्स्वमूलभूतं विष्णुं स्वहृदयेऽवभातमपश्यत्, चिरं तपस्तप्त्वा च तत्प्रसादादेव प्रजोत्पादने समर्थो बभूव, तत्प्रसादादेव च वेदान् स्मृत्वा सर्वज्ञतां लब्ध्वानिति भागवतादिषु प्रथितम्। अतो विष्णुरेवैषः। स च स्वकृतधर्ममर्यादापालनार्थं स्वेच्छयैवावतरति न तु कस्यचिदाज्ञया।

यथाह भगवान्—

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम्॥

परित्राणय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥ इति ।

किञ्चेतिहासपुराणेषु तत्तदवतारार्थं स्तुतिनमस्कादिपूर्विका प्रार्थनैव दृश्यते ब्रह्मादीनाम् । नत्वाज्ञातारकनिग्राह्यत्वमपीशस्य स्वकृतवरामोघत्वादिरूपमर्यादा-पालनार्थं स्वेच्छयैवेति बोध्यम् ।

यत्तु ब्रह्मलोकात्परस्य लोकस्याभावप्रतिपादनं तदयुक्तम्—

यमाहुः सर्वभूतानां प्रकृतेः प्रकृतां ध्रुवाम् ।
अनादिनिधनं देवं प्रभुं नारायणं परम् ॥
ब्रह्मणः सदनात्तस्य परं स्थानं प्रकाशते ।
ब्रह्मलोकमतिक्रम्य विष्णुलोकं महीयते ॥
उपरिष्टात् क्षितेरष्टौ कोटयः सत्यमीरितम् ।
सत्यादुपरि वैकुण्ठो योजनानां प्रमाणतः ॥
भूलोकात्परिसंख्यातः कोटिषोऽशसम्मितः ।
यत्रास्ते श्रीपतिः साक्षात्सर्वेषामभयप्रदः ॥

इत्यादिषु पुराणेषु वैकुण्ठाख्यस्य विष्णुलोकस्य शतशः प्रतिपादनात् । वेदेष्वश्रवणमात्रेण तदप्रामाण्ये स्मृतिविहितानामश्रुतानामष्टकादीनामप्रामाण्य-प्रसङ्गात् । औडुंवरी वेष्टनीया सर्वेति स्मृतेस्तु औडुंवरीं स्पृशन् गायेदिति प्रत्यक्ष-श्रुतिविहितस्पर्शाबाधाया प्रामाण्यस्वीकारः न तु तदर्थस्य सर्ववेस्टनस्याश्रुतत्वमात्रेण । न चेह तथा वैदिकार्थबाधोऽस्ति, सत्यलोकात्परो लोकोनास्तीति वेदेनाप्रतिपादनात् । अथवा सत्यलोकस्यैव त्रिभूमिप्रासादस्येवोत्तरोत्तरभूमिरूपाः सन्तु ब्रह्मविष्णुशिवलोका इति न विरोधगन्धोऽपि ।

किञ्च महोपनिषदि "एकोहवा नारायण आसीन्न ब्रह्मा नेशानः" इत्यादिना ब्रह्मेशानादिसर्वव्यवच्छेदेनैकस्यैव नारायणस्य सर्गादौ सद्भावं ततो भूतेन्द्रियादि-प्रपञ्चोत्पत्तिं चाभिधाय, अथ पुनरेवनारायणः सोऽन्यत्कामो मनसाध्यायत, तस्य ध्यानान्तःस्थस्य ललाटात्स्वेदोऽपतत् ता इमा आपः, तासु तेजोहिरण्मयमण्डलमभवत् तत्र ब्रह्मा चतुर्मुखोऽजायतेत्यादिना अथ पुनरेव नारायणः सोऽन्यत्कामो मनसाध्यायत तस्य ध्यानान्तःस्थस्य ललाटात् त्र्यक्षः शूलपाणिः पुरुषोऽजायतेत्यादिना च ब्रह्मरुद्र-योरुभयोरपि तत्सृष्टत्वोपवर्णनंदृश्यते । तदुपबृंहणञ्च—

आसीदिदं तमोभूतप्रज्ञातमलक्षणम् ।
अप्रतर्क्यमनिर्देश्यं प्रसुप्तमिव सर्वतः ॥
ततः स्वयम्भूर्भगवान् अव्यक्तो व्यञ्जयन्निदम् ।
महाभूतादि वृत्तौजाः प्रादुरासीत्तमोनुदः ॥

४

सोऽसावतीन्द्रियग्राह्यः सूक्ष्मोऽव्यक्तः सनातनः।
सर्वभूतमयोऽचिन्त्यः स एव स्वयमुद्बभौ॥
सोऽपि ध्यायन् शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः।
अप एव ससर्जादौ तासुवीर्यमथासृजत्॥
तदण्डमभवद्धैमं सहस्रांशुसमप्रभम्।
तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः॥
आपो नारा इति प्रोक्ता आपो वै नरसूनवः।
तद्यदस्यायनं प्रोक्तं तेन नारायणः स्मृतः॥

इत्यादिमानवचनमेतच्छ्रुतिमूलकम्। अत्रोदाहृतोपनिषत्प्रक्रिययैव करिष्यमाणानामनिर्वचनसूचितं नारायणं स्वयम्भ्वादिशब्दितं प्रस्तुत्य तस्य महदादिपरिणतवीर्यत्वोक्त्या प्रथमं भूतेन्द्रियसर्गसंक्षेपेण प्रदर्श्यानन्तरं सृष्टिप्रकाराद्यभिधानं स्वशरीरात्सलिलसृष्टिं तन्मध्येऽण्डसृष्टिं तत्र ब्रह्मसृष्टिं चोक्त्वातन्मुखेभ्यश्चतुर्भ्यस्तत्तद्वस्तुविशेषोत्पत्तिप्रतिपादनप्रदर्शनेन मूलमूलिभावस्यस्पष्टत्वात्।

नन्वत्र नारायणनामनिर्वचनं सन्निहितत्वात् जलमध्यस्थाण्डोत्पन्नत्वेन क्लृप्तावयवशक्तिकत्वाच्च ब्रह्मण्येवान्वेति न तु स्रष्टरि स्वयम्भुवीति नोदाहृतोपनिषन्मूलत्वं युज्यते। न च सन्निहितादपि व्यवहितं साकाङ्क्षं बलीय इति न्यायेन सन्निधानात्प्रकरणस्य बलीयस्त्वात् प्रकरणिनि स्रष्टर्येव तदन्वयस्तत्रापि महाजलौघसृष्टयुक्तिसामर्थ्यसिद्धतन्मध्यनिवाससद्भावेनावयवार्थक्लृप्तेरिति मन्तव्यम्। तस्यात्र प्रकरणित्वासिद्धेः प्राधान्येन तत्प्रतिपादयिषायां लिङ्गाद्यदर्शनात्।

"भूतग्रामस्य सर्वस्य ह्युत्पत्तिं प्रलयं तथा" इति महर्षिणा प्रपञ्चोत्पत्तिप्रलयप्रश्ने हि तन्निरूपणायासीदित्यादि प्रवृत्तं न तु भूतग्रामस्य यत उदयो यत्र च लयस्तं वदेति प्रश्ने प्रवृत्तम्। तस्मान्निष्परिपन्थिनासन्निधानेन नारायणनामनिर्वचनस्य ब्रह्मण्येवान्वयो युक्तस्तस्यापि पुराणेषु तन्नामप्रसिद्धेरिति।

अत्रोच्यते, अपां नारसंज्ञाविधायिवाक्येन व्यवधानान्न ब्रह्मणः सन्निधानमस्ति, किञ्चापोनरसूनव इत्यत्रापां स्रष्टुर्नरशब्दितस्य ततोऽति सन्निधानात्तत्रैव निर्वचनान्वयो युक्तो न ब्रह्मणि।

यत्तत्कारणमव्यक्तं नित्यं सदसदात्मकम्।
तद्विसृष्टः स पुरुषो लोके ब्रह्मेति कीर्त्यते॥

इति तदनन्तरश्लोके तत्संज्ञाविधायके तद्विसृष्ट इति संज्ञिविशेषणवैयर्थ्याच्च। आद्यसंज्ञाविधानस्य स्रष्टृविषयत्वे आनन्तर्याद् द्वितीयसंज्ञाऽपि तद्विषयेतिशङ्कावारणाय संज्ञिविशेषणमितिवत्संज्ञाद्वयस्याप्येकविषयत्वे तत्प्रयोजनासंभवात्।

महाप्रलयकालेतु एतदासीत्तमोमयम्।
प्रसुप्तमिव चातर्क्यमप्रज्ञातमलक्षणम्॥

ततः स्वयम्भूरव्यक्तः प्रभवः पुण्यकर्मणाम् ।
व्यञ्जयन्नेतदखिलं प्रादुरासीत्तमोनुदः ॥
अतीन्द्रियः परोव्यक्तादन्तर्यामी सनातनः ।
नारायण इति ख्यातः स एव स्वयमुद्बभौ ॥
स्वशरीरादपिध्यायन् सिसृक्षुर्विविधाः प्रजाः ।
अप एव ससर्जादौ तासुवीर्यमवासृजत् ॥
तदेवाण्डं समभवद् हेमरूप्यमयं जगत् ।
तत्र ब्रह्मा समभवत् सर्वलोकपितामहः ॥

इत्यादि मात्स्यवचने समानार्थं स्रष्टर्यैव नारायणपदप्रयोगस्यासंदिग्धत्वाच्च । बह्वर्थैकरूप्यदर्शनेन मानववचनानां महोपनिषन्मूलत्वनिश्चयेन तदनुरोधेनापि नारायणपदनिर्वचनस्य तत्रत्यनारायणपदप्रयोग१मानविषयत्वावश्यंभावाच्च ।

तथा च "ततः स्वयम्भूर्भगवान्" इत्यादिना प्रस्तुते देवे "अप एव ससर्जादौ तासु वीर्यमत्रासृजत्" इत्येतद्वचनसामर्थ्यसिद्धजलनिवासप्रवृत्तिनिमित्तकनारायणपदनिर्वचनं नाराय्णपदवाच्यत्वेन प्रसिद्ध एव स्रष्टृत्वप्रतिपादनस्य पर्यवसानं गमयति । अन्यत्र पर्यवसाने प्रवृत्तिनिमित्तानुरोधेन नारायणपदस्यापि तत्रैव पर्यवसानावश्यभावे प्रसिद्धिविरोधापत्तेः ।

तथा चोपबृंहणानुरोधादुदाहृतोपनिषदि स्रष्टृत्वप्रतिपादनस्यापि नारायण एव पर्यवसानमुपेयम् ।

अहञ्च भवतोवक्त्रात्कल्पान्ते घोररूपधृक् ।
शूलपाणिर्भविष्यामि क्रोधजस्तव पुत्रकः ॥ इति ॥

कौर्मे नाराणं प्रतिशिववचनात्तदनुसारेण तस्य ललाटात् त्र्यक्षः शूलपाणिरित्यत्र तस्येत्यस्य नारायण एव पर्यवसानावश्यकत्वाच्च । एतेन मूलकारणत्वं वक्ष्यमाणपरमशिवस्येति निरस्तम् ।

नन्वस्येवं तथापि कस्मिंश्चिदवान्तरसर्गविशेषे चतुर्मुखस्येव नारायणस्याप्यधिकारसंभवादुदाहृतोपनिषदस्तद्विषयत्वेन चरितार्थत्वान्न परशिवस्य मूलकारणत्वनिरास इति चेन्न, अस्या नारायणोद्भूतेन्द्रियसृष्टेरपि प्रतिपादनदर्शनेन महाकल्पादिसर्गविषयत्वात् । "एको ह वै नारायण आसीत्" इति सर्वेतरव्यवच्छेदेन सर्गाद्यसमयेऽवस्थानप्रतिपादनस्य नारायणादन्यस्य कस्यचित्कल्पनेऽसामञ्जस्याच्च ।

ननु सर्वाण्याख्यानानि पारिप्लवं शंसन्तीति सर्वाख्यानशंसनविधेर्वाक्यशेषश्रुतेषु "मनुर्वैवस्वतो राजा" इत्यास्याख्यानविशेष्ष्विवैक इत्यस्य "न ब्रह्मेशानः" इत्यादिवाक्यशेषोपात्तपरमशिवविभूतिरूपब्रह्मेशानादिमात्रव्यवच्छेदे पर्यवसानसंभवान्न

किञ्चिदासंगत्यमिति चेन्नैवम्, प्रथमश्रुतस्य वाक्यशेषानुरोधेन संकोचायोगात्। एष वाच प्रथमो यज्ञो यज्ञानाम्" इत्यत्र ज्योतिष्टोमस्यान्यसर्वयज्ञप्राक्ष्मस्यान्यसर्वयज्ञानां ज्योतिष्टोमपाश्चात्त्यत्वस्य वा विधेयस्य "यो वै त्रिवृदन्यं यज्ञक्रतुमापद्यते स तं दीपयति" इत्यादिवाक्यशेषे एकस्तोमक्रतुमात्रसंकीर्तनानुरोधेन संकोचस्य क्रमलक्षणे निराकरणात् "परिप्लवे सर्वाण्याख्यानानि" इति विध्यनन्तरं "पारिप्लवमाचक्षीत" इति पुनर्विधानानर्थक्यपरिहाराय वाक्यशेषश्रुतविशेषनियमार्थमित्यवच्छेदकपुनर्विधिश्रुत्यनुरोधात्संकोचो न तु वाक्यशेषे विशेषसंकीर्तनमात्रानुरोधात्।

इह तु सर्वेतरावच्छेदेन सिद्धस्यापि ब्रह्मादिव्यवच्छेदस्य पुनः संकीर्तनं स्तावकतयोपपद्यते इति न तस्य संकोचापादानसामर्थ्यम्। तस्मात् "एकोह वाव" इत्यादेर्महासर्गाद्यसमये सर्वेतरव्यवच्छेदेनावस्थानप्रतिपादानपरस्य तत्समानार्थकनारायणोपनिषदादेः

अहं सर्वस्य जगतः प्रभवः प्रलयस्तथा।
मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय॥
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव।
न मे विदुः सुरगणा प्रभवं न महर्षयः॥
अहमादिर्हि देवानां महर्षीणाञ्च सर्वशः।
विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्॥
मया ततमिदं सर्वं जगदव्यक्तमूर्तिना।
ब्रह्मरुद्रेन्द्रवाय्वग्निसरिद्भुजगपर्वताः॥
त्वत्स्था दृष्टा द्विजेन्द्रेण तेन सत्येन मोक्षय।
मार्कण्डेन पुराकल्पे प्रविश्य जठरं तव॥
चराचरं जगद् दृष्टं तेन सत्येन मोक्षय।
यस्मिन् विश्वानि भूतानि तिष्ठन्ति च विशन्ति च।
प्राहुर्नारायणं देवं यं विश्वस्य परायणम्॥

अणीयसामणीयांसं स्थविष्ठं च स्थवीयसाम्। इत्यादि स्मृतेश्च नारायणादन्यत्रापर्यवसायित्वात्स एव सर्वेश्वर इति वैष्णवाः।

केचित्तु मूर्तित्रयातीतं मायाशबलं ब्रह्म नारायण इति मन्यन्ते। स एव परमविष्णुरित्युच्यते। तेषां

ब्रह्मा दक्षादयः कालस्तथैवाखिलजन्तवः।
विभूतयो हरेरेता जगतः सृष्टिहेतवः॥
विष्णुर्मन्वादयः कालस्तथैवाखिलजन्तवः।
स्थितेर्निमित्तभूतस्य विष्णोरेता विभूतयः॥

रुद्रःकालोऽन्तकाद्याश्च समस्ताश्चैव जन्तवः ।
चतुर्धा प्रलयायैते जनार्दन विभूतयः ॥ इति

विष्णुपुराणवचनानि, त्वत्क्रोधसंभवोरुद्रस्तमसाच समावृतः । त्वत्प्रसादाज्जगद्धाता रजसा च पितामहः ॥

त्वत्प्रसादात् स्वयं विष्णुः सत्त्वेन पुरुषोत्तमः । इत्यादि लैङ्गवचनानि एतादृशानि भागवतबृहन्नारदीयादिवचनानि चानुकूलानि । प्रपञ्चसारोपक्रमे च त्रिमूर्तीनां शेषशायिनः पुरुषोत्तमस्य च प्रश्नोत्तरनिबन्धनेन स्पष्टीकृतोऽयमर्थः । उत्तरतापनीये नृसिंहस्य तुरीयत्वेन व्यपदेशात्, पूर्वतापनीये "ब्रह्मा विष्णुर्महेश्वरः पुरुष ईश्वरः सरस्वती श्रीगौरी प्रकृतिर्विद्ये"त्यारभ्य "सर्वं यो वै नृसिहो देवो भगवान् यच्च सर्वं तस्मै ते नमः" इत्यन्तेन ब्रह्मादीनां नृसिंहविभूतिषु पाठाच्च प्रत्यक्षश्रुतिमूलताप्यस्यार्थस्य प्रतीयते । तस्मत्तुरीयो महाविष्णुरीश्वरः अन्ये तस्य विभूतयः । स च जगतामुपादाननिमित्तश्च । स एव पुरुष इति भगवानिति चोच्यते । तदुक्तम्—

तथा पुरुषशब्दोऽयं वासुदेवेऽवतिष्ठते ।
तं विना पुण्डरीकाक्षं कोऽन्यः पुरुषशब्दभाक् ॥
भगवानिति शब्दोऽयं तथा पुरुष इत्यपि ।
निरुपाधी च वर्तेते वासुदेवे सनातने ॥
ब्रह्माद्याः सकलाः देवा यक्षगन्धर्वकिन्नराः ।
ते सर्वे पुरुषांशत्वादुच्यन्ते पुरुषा इति ॥ इत्यादि ।

शैवास्तु—

"ततो ह्यस्य वन्धविपर्ययो फलमत उपपत्तेः" इत्यादिन्यायेन पशुस्थानीयानां जीवानां बन्धमोक्षसुखदुःखादिलक्षणं फलं यदधीनं स ईश्वरः । तच्च शैवलैङ्गपुराणादिषु शिवाधीनमिति प्रतिपादितं तत्तस्य पशुपतेः सर्वेश्वरत्वं ज्ञापयति । तथाहि—

ब्रह्माद्याः स्थावरान्ताश्च देवदेवस्य शूलिनः ।
पशवः परिकीर्त्यन्ते संसारवशवर्तिनः ॥
तेषां पतित्वाद् देवेशः शिवः पशुपतिः स्मृतः ।
मलमायादिभिः पाशैः स बध्नाति पशून्पतिः ॥
स एव मोचकस्तेषां भक्त्या सम्यगुपासितः ।
चतुर्विंशति तत्त्वानि मायाकर्मगुणा अमी ॥
विषया इति कथ्यन्ते पाशा जीवनिबन्धनाः ।
ब्रह्मादिस्तम्बपर्यन्तान् पशून् बध्द्वा महेश्वरः ॥
पाशैरेतैः पतिर्देवः कार्यं कारयति स्वकम् । इति ।

किञ्च, प्राग् जगत्कारणत्वेनोक्तयो र्ब्रह्मजनार्दनयोरपि यदीशानस्य कारणत्वं तर्हि तस्य जगतः कारणत्वे किमु वक्तव्यम्। यथाह श्रीकृष्णः शिवं प्रति हरिवंशे पारिजातसंहितायाम्—

अहं ब्रह्मा कपिलोऽथाप्यनन्तः,
पुत्राः सर्वे ब्रह्मणश्चातिवीर्याः।
त्वत्तः सर्वे देवदेवप्रसूता—
एवं सर्वेशः कारणात्मा त्वमीड्यः॥ इति।

किञ्च प्रलय ·उच्छिन्नसम्प्रदायं वेदं वर्गादौ यो ब्रह्मादीन् प्रत्युपदिशति स ईश इत्यविवादम्। तच्चोपदेष्टृत्वं शिवस्य स्मर्यते। तत्र तावच्छिवपुराणे—

प्रतिसर्गं प्रसूतानां ब्रह्मणां शास्त्रविस्तरम्।
उपदेष्टा स एवादौ कालावच्छेदवर्तिनाम्॥
कालावच्छेदयुक्तानां गुरुणामप्यसौ गुरुः।
सर्वेषामपि सर्वेशः कालावच्छेदवर्जितः॥ इति।
ईशानः सर्वविद्यानां स एवादिगुरुर्बुधाः।
तस्य शिष्यो महाविष्णुः सर्वज्ञानमहोदधिः॥ इति च

श्वेताश्वतरशाखिनां मन्त्रोपनिषदि—

"यो ब्रह्माणं विदधातिपूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" इत्यस्य मन्त्रस्य कौर्मे—

"निवेदयेत्तच्चात्मानं यो ब्रह्माणमितीश्वरः" इति शिवपूजायामात्मार्पणे विनियोगनिधानात्।

योऽग्रे मां विदधे पुत्रं ज्ञानञ्च प्रहिणोति मे।
यत्प्रसादान्मया प्राप्तं प्राजापत्यमिदं पदम्॥
ब्रह्माणं मुनयः पूर्वं सृष्ट्वा तस्मै महेश्वरः।
दत्तवानखिलान् वेदानात्मन्येव स्थितानिमान्॥

इत्यादिशैवमात्स्यादिगतब्रह्मादिवचनैरुपबृंहणञ्च शिवपरत्वं निर्धार्यते। शिवमहिमविश्वासादीनामतिविरलत्वं श्रीविष्णोः शिवेभक्त्यतिशयः शिवस्य सर्वेश्वरत्वज्ञापकः। तत्प्रसादाद्धरेस्तत्त्वज्ञता च स्मर्यते कौर्मादिषु—

कृष्णद्वैपायनः साक्षात् विष्णुरेव सनातनः।
कोह्यन्यस्तत्त्वतो रुद्रं वेत्ति तं परमेश्वरम्॥
नार्जुनेन समः शम्भोर्भक्त्यापूतो भविष्यति।
मुक्त्या सत्यवतीसूनुं कृष्णं वा देवकीसुतम्॥इत्यादि।

यत्तु भागवते चतुर्थस्कन्धे दक्षाध्वरे कुपितस्य शिवस्य शान्ति प्रार्थयमानान् देवान् प्रति विधेर्वचनम्—

नाहं न यज्ञो न च यूयमन्ये,
देहभाजो मुनयश्च तत्त्वम् ।
विदुः प्रमाणं बलवीर्ययोर्वा,
तस्यात्मतन्त्रस्य क उपायं विधित्सेत् ॥ इति ।

यच्चाष्टमस्कन्धे शम्भुं प्रति सुराणां वचनम्—

न ते गिरीशाखिललोकपाल-
विरिञ्चिवैकुण्ठ-सुरेन्द्र-गम्यम् ।
ज्योतिः परं यत्र रजस्तमश्च,
सत्त्वं न यद् ब्रह्म निरस्तभेदम् ॥ इति ।

यच्च काशीखण्डेऽगस्त्यं प्रति स्कन्दवचनम्—

कुम्भयोने न वेत्त्येव महिमानं महेशितुः ।
चतुर्भुजोऽपि वैकुण्ठश्चतुर्वक्त्रोऽपि विश्वकृत् ॥ इति ।

यच्च मात्स्ये—

न विदुर्यं हरिब्रह्ममुखा अपि मुनीश्वराः । इत्यादि । यच्च मोक्षधर्मे शिवं प्रति दक्षवचनम्—

न ब्रह्मा न च गोविन्दो पौराण ऋषयश्च ये ।
याथातथ्येन माहात्म्यं न ते वेत्तुं क्षमाः शिव ॥ इति ।

तत्सर्वं वक्ष्यमाणकैमुतिकन्यायेन शिवत्वस्येतरपुरुषदुखगाहत्वपरं न तु हरेस्तदनवबोधपरमिति न विरोधः । अन्यथा तु—

ओङ्कारं रथमारुह्य विष्णुं कृत्वाऽथसारथिम् ।
ब्रह्मलोकपदान्वेषी रुद्राराधनतत्परः ॥

इत्यमृतबिन्दूपनिषदि शिवतत्त्ववित्त्वाद्विष्णोस्तन्मार्गदर्शिपितृत्वरूपसारथित्वोक्तिर्विरुध्येत । सर्वोत्तरशिवाराधनपरत्वं तस्य तस्मिन् शिवस्य प्रसादाधिक्यञ्च ।

अहं यथावद्राराध्यः कृष्णो ना क्लिष्टकर्मणा ।
तस्मादिष्टतमः कृष्णादन्यो मम न विद्यते ॥ इति ।

सौषुप्तिपर्वके शिववचनात्,

देवदेवस्त्वचिन्त्यात्मा अजप्यो विष्णुरव्ययः ।
सर्वरूपं भवं ज्ञात्वा लिङ्गेऽर्चयति तं प्रभुम् ॥
तस्मिन्नत्यधिकां प्रीतिं करोति वृषभध्वजः । इति

द्रोणपर्वणि, व्याসवचनाच्च सिद्धं शिवप्रसादात्तस्य सर्वोत्तरपदलाभः इति । स च "तव श्रिये मरुतो मर्जयन्तः रुद्र यत्ते जनितचारुचित्रम्" इति शिवाभिव्यक्ति-

स्थानं लिङ्गं प्रकृत्य तद्विशेषयता मन्त्रवर्णेनदर्शितः। "पदं यद् विष्णोः" इत्यादिकमप्यत्रानुकूलम्।.सन्दर्भोऽयं पराशरपुराणे स्पष्टीकृतः—

रौद्रं लिङ्गं महाविष्णुर्भवत्यालिङ्ग्य शिलामयम्।
चारु चित्रं समभ्यर्च्य लब्धवान् परमं पदम्॥ इति।

काशीखण्डे च चतुर्भुजाभिषेकाध्याये पट्टाभिषेकपूर्वकं वैकुण्ठस्थानमखिलजगत्प्रभुत्वमात्मनोऽप्यधिकशौर्यमन्यच्चातिदुर्लभतरजातं शिवेन हरये दत्तमित्युपवर्णितम्।

आरण्यपर्वणि च तीर्थयात्रा विधौ-
ततो गच्छेत्सुवर्णाक्षं त्रिषु लोकेषु विश्रुतम्।
यत्र विष्णुः प्रसादार्थं रुद्रमाराधयत्पुरा॥
वरांश्च सुबहून् लेभे दैवतैरपि दुर्लभान्।
उक्तश्च त्रिपुरघ्नेन परितुष्टेन भारत॥
अपि चान्यैः प्रियतमो लोके कृष्ण भविष्यसि।
त्वन्मुखञ्च जगत्सर्वं भविष्यति न संशयः॥ इति प्रतिपादितम्।

द्रोणपर्वणि च तपोऽध्याये षष्टिवर्षसहस्राणि तपश्चर्यया प्रसादितवते नारायणाय महेश्वरेण सर्वोत्तरं शौर्यादिकं दत्तमिति प्रपञ्चितम्।

हरिवंशे पारिजातसंहितायाम्—

इति संस्तूयमानस्तु भगवान् गोवृषध्वजः।
प्रसार्य दक्षिणं हस्तं नारायणमथाब्रवीत्॥
मनीषितानामर्थानाम्प्राप्तिस्तेऽस्तु सुरोत्तम।
पारिजातं च हर्तासि माभूत्ते मनसोव्यथा॥
पुरा मैनाकमाश्रित्य तपस्त्वमकरोर्यदा।
तदा मम वरं कृष्ण संस्मृत्य स्थैर्यमाप्नुहि॥
अवध्यश्चमजेयश्च मत्तः शूरतरस्तथा।
भवितासीत्यवोचं यत्तत्तथा न तदन्यथा॥ इत्युक्तम्।

एवं शैवलैङ्गादिप्रतिपादितमपि द्रष्टव्यम्।

कौर्मे माण्डेयमुखानृषीन्प्रति श्रीकृष्णः सर्गादौ महार्णवे काकतालीयन्यायेन स्वेन ब्रह्मणः समागमं विवादं चोक्त्वा सामान्येन पूर्वमुक्तस्य शिवमाहात्म्यस्य ख्यापनायोक्तवान्—

एवं विवादे वितते मायया परमेष्ठिनः।
प्रबोधार्थं परं लिङ्गं प्रादुर्भूतं शिवात्मकम्॥

कालानलसमप्रख्यं ज्वालामालासमाकुलम् ।
क्षयवृद्धिविनिर्मुक्तमादिमध्यान्तवर्जितम् ॥
ततो मामाह भगवानधोगच्छ त्वमाशु वै ।
अन्तमस्य विजानीयामूर्ध्वं गच्छेयमित्यजः ॥
तदाशु समयं कृत्वा गत्वातूर्ध्वमधश्च नौ ।
पितामहोऽप्यहं नान्तं ज्ञातवन्तौ समेत्य वै ॥
ततो विस्मयमापन्नौ ध्यायन्तो विश्वमीश्वरम् ।
प्रोच्चरन्तौ महानादमोङ्कारं परमं पदम् ॥
बद्धाञ्जलिपुटौ भूत्वा शम्भुं तुष्टुवतुः पुनः । इति ।

शिवश्चैताभ्यां स्तुतः सन् स्वस्मात्तयोरुत्पत्तिमभिधायोवाच—

प्रीतोऽहं युवयोः सम्यग्वरं दद्मियथेप्सितम् ।
एवमुक्त्वा महादेवौ महादेवः स्वयं शिवः ॥
आलिङ्ग्य देवं ब्रह्माणं प्रसादाभिमुखोऽभवत् ।
ततः प्रहृष्टमनसौ प्रणिपत्य महेश्वरम् ॥
ऊचतुः प्रेक्ष्य तद्वक्त्रं नारायणपितामहौ ।
यदि प्रीतिः समुत्पन्ना यदि देयो वरश्च नौ ॥
भक्तिर्भवतु नौ नित्यं त्वयि देव महेश्वर ।
ततः स भगवानीशः संहसन् परमेश्वरः ॥
उवाच मां महादेवः प्रीतः प्रीतेन चेतसा ।
प्रलयस्थितिसर्गाणां कर्ता त्वं धरणीपते ॥
वत्स वत्स हरे विश्वं पालयैतच्चराचरम् ।
संमोहस्त्यज्यतां विष्णो पालयैनं पितामहम् ॥
भविष्यत्येष भगवांस्तव पुत्रः सनातनः ।
अहं च भवतोवक्त्रात्कल्पादौ घोररूपधृक् ॥
शूलपाणिर्भविष्यामि क्रोधजस्तव पुत्रकः । इत्यादि ।

अत्र प्रथमं ब्रह्मनारायणयोरीश्वरत्वाभिमानेन विवादे प्रवृत्ते तदभिमानवारणाय शिवलिङ्गप्रादुर्भावः । तच्छिरःपादान्वेषणे प्रवृत्तयोस्तदनुपलब्ध्याऽभिमाने निवृत्ते शिवप्रादुर्भावः तत्प्रसादेन चैतयोः सर्वसामर्थ्यप्राप्तिरत एतयोरैश्वर्यं विश्वेश्वर शिवाधीनं शिवस्य तु स्वाधीनं निरङ्कुशमैश्वर्यम् । प्रसादेनैव च तत्तन्माहात्म्यख्यापनाय कस्मिंश्चित्कल्पे ततस्ततोंऽशेन प्रादुर्भाव इत्यादि प्रतिपादितम् ।

अत एवोक्तं मात्स्ये—

न सजातो महादेवो भूतभव्यभवोद्भवः ।
शरण्यः शाश्वतः शास्ता शङ्करः परमेश्वरः ॥

ब्रह्मेन्द्रविष्णुप्रमुखा जगज्जन्मजरार्दिताः ।
तस्यैते परमेशस्य सर्वे क्रीडनकाः स्मृताः ॥ इति ।

एवं शैवलैङ्गादिषु अपि द्रष्टव्यम् । ततश्च स्वतन्त्रैश्वर्यः शिव एवाराध्यो मोक्षादिकामैः । "सत्यभिक्षुके न भिक्षुको याच्यः" इति न्यायात् ।

"देवो विश्वाधिको रुद्रः शिव एको ध्येयः शिवङ्करः अन्यत्सर्वं परित्यज" इत्यादिश्रुतेश्च । शिवस्यावश्याराध्यत्वं मन्त्रो दर्शयति ।

अन्तरिच्छति तं जने रुद्रं परो मनीषया गृभ्णन्ति जिह्वया सममिति । जनेष्वन्तर्यामिभावेनतिष्ठन्तंपरतः परं सर्वोत्कृष्टं रुद्रं ये मनीषयाऽन्तर्ध्यायन्ति सादरं ते समं सस्यविकारभूतमन्नं जिह्वया गृह्णन्ति इति मन्त्रस्य शाब्दोऽर्थः । ये तु कुतर्कव्यसनिनस्तमन्तर्नेच्छन्ति ते पुरीषमेव जिह्वया गृह्णन्तीति धन्या खलु वने वाता इत्यादेरिवाप्रस्तुप्रशंसागम्यार्थं कटाक्षः । तथाहि उपबृंहितं पराशरेण—

अन्तरिच्छति यो रुद्रं सदा वन्द्यं मनीषया ।
गृह्णाति जिह्वया सोऽयं रसपूर्णामृतोदकम् ॥
अन्तर्नेच्छन्ति ये रुद्रं भवानीसहितं भवम् ।
पुरीषमेव गृह्णन्ति जिह्वया ते न संशयः ॥ इति ।

अत्राद्येन मन्त्रस्य वाच्योऽर्थो दर्शितः । द्वितीयेन गम्योऽर्थः । स च स्वयं बाधितत्वात्तेषां गर्हितवृत्तित्वे पर्यवस्यति दर्शितोऽयमर्थोऽन्यत्र—

"धिक् तेषां जन्म धिक् तेषां येषां न वसति हृदये कुमतिपथविमोचको रुद्रः" इति । अयमेवार्थो भागवते शिवं प्रस्तुत्य "हसन्ति यस्याचरितं हि दुर्भगः" इति दर्शितः । दुष्टभगोत्पन्नाः संकीर्णक्षेत्रोत्पन्ना इत्यर्थः । एवं साङ्कर्यशङ्कामेव हृदि निधायोक्तं नागरखण्डे—

एवं कुत्सितजीवनत्वोक्त्या तेषां सद्भिर्बहिष्कार्यत्वमेव सूचितम् । तच्च बहुधा प्रपञ्चितं कौर्मादिषु । एतानि वचनानि विष्णवाद्याराधननिषेधपराणीति न भ्रमितव्यम् । शिवाराधनस्य मोक्षसाधनज्ञानं प्रत्यन्तरङ्गत्वद्योतनार्थत्वादेषाम् । एतदेवाभिप्रेत्य सौरपुराणे पठ्यते—

क्रमेण लभ्यतेऽन्येषां मुक्तिराराधनाद् द्विजाः ।
आराधनान्महेशस्य तस्मिन् जन्मनि मुच्यते ॥ इति ।

अत्र तस्मिन् जन्मनि मुच्यते इति तीव्रभक्तिपूर्वकज्ञानार्थं शिवाराधकपुरुषधौरेयविषयम्—

अल्पभावोऽपि यो मर्त्यः सोऽपि जन्मत्रयात्परम् ।
नः योनियन्त्रपीडायै भविष्यति न संशयः ॥ इति ।

विशेषवचनात्। भोगेच्छया कृतं शिवाराधनं सर्वोत्कृष्ट शिवलोकप्राप्तिफलं भवति सर्वोत्कृष्टत्वञ्च शिवलोकस्य काशीखण्डेऽभिहितम्।

"सत्यादुपरि वैकुण्ठः" इत्यादिना विष्णुलोकं प्रतिपाद्य—

ततस्तु षोडशगुणः कैलासोऽस्ति शिवालयः।
पार्वत्या सहितः शम्भुर्गजास्यस्कन्दनन्दिभिः॥
यत्र तिष्ठति देवेशः सकलः स परः स्मृतः।
तस्य देवस्य खेलेयं स्वलीलामूर्त्तिधारिणः॥
स विश्वेश इति ख्यातस्तदाज्ञाकृदिदं जगत्॥ इति।

वायवीयेऽपि ब्रह्मविष्णुलोकाभ्यामुपरितनत्वेनाधिकैश्वर्यत्वेन च शिवलोकः प्रतिपादितः। स एव शिवभक्तैः प्राप्यः शिवधर्मोत्तरे विकलाङ्गादिरूपशिवपूजा प्राप्यान् विष्णुलोकान्तान् लोकानुपवर्ण्यानन्तरं दर्शितः—

ज्ञेयं विष्णुपदादूर्ध्वं दिव्यं शिवपुरं महत्।
भोगसंस्थानमतुलं कर्मयोगरतात्मनाम्॥
अप्रमेयगुणैर्दिव्यैः विमानैः सार्वकामिकैः।
असंख्यैस्तत्पुरं व्याप्तं सर्वप्राण्युपकारकैः॥
सहस्रभूमिविस्तीर्णैः सूर्यकोटिसमप्रभैः।
रुद्रलोकमिति प्रोक्तमशेषगुणसंयुतम्॥
सर्वेषां शिवभक्तानां तत्पुरं परकीर्तितम्॥ इत्यादि।

तत्रैव प्रदेशान्तरेऽपि—

श्रीमच्छिवपुरं दिव्यमैश्वरं सार्वकामिकम्।
शिवेन शिवभक्तानां वैष्णवात्परमीर्यते॥ इत्युक्तम्।

इदञ्चोत्कृष्टलोकत्वं शिवस्योत्कृष्टत्वं ज्ञापयति। लोके तथा दर्शनात्।

अपि च—

विष्ण्वादिभिर्महादेवैर्यस्यलिङ्गं सदाऽर्च्यते।
तस्योत्कृष्टतमत्वे को विवादो हि महाधियाम्॥

तदाहानुशासनिके उपमन्युरिन्द्ररूपधरं शिवं प्रति—

यस्य ब्रह्मा च विष्णुश्च त्वञ्च शक्र सहामरैः।
अर्चयन्ति सदा लिङ्गं तस्माच्छ्रेष्ठतरो हि कः॥ इति।

तस्मात्सर्ववशित्वात्सर्वाराध्यत्वात् सर्वफलप्रदत्वाच्च सर्वे सर्वेश्वरः शिव इति प्रतिपादयन्ति।

स च निमित्तकारणमेव जगताम् । उपादानं तु तन्माया । यत्तु क्वचिन्मायिनि महेश्वरेऽपि शास्त्रेषूपादानत्वं प्रतिपादितं दृश्यते तत्तदुपादानभूतमायानियन्तृत्वेनौपचारिकमिति केचित् ।

परमाणव उपादानकारणं महेश्वरो निमित्तकारणमित्यपरे । अन्ये तु ईश्वरस्य द्वे शक्ती । एका चिदात्मिकाऽपरा आनन्दात्मिका, तयोश्च शिवस्वरूपत्वं शिवशक्तित्वं च । तत्र चिद्रूपा शक्तिर्गौरी, तद्विशिष्टस्य शिवस्य जगन्निमित्तकारणत्वम् ।

आनन्दरूपा शक्तिर्विष्णुस्तद्विशिष्टस्य तस्योपादानकारणत्वम् । माया अविद्यादिशब्दवाच्या शक्तिस्त्वन्यैव । सा चोभयविधेऽपि कारणत्वे सहकारिणी । तदुक्तं संक्षेपशारीरके—

चिच्छक्तिः परमेश्वरस्य विमला चैतन्यमेवोच्यते, सत्यैवास्य जडा परा भगवतः शक्तिस्त्वविद्योच्यते । इति । स्मर्यते च—

"अभेदः शिवयोः सिद्धो वह्निदाहकयोरिव" इत्यादि । विष्णोरपि शक्तित्वमभिहितं ब्रह्माण्डपुराणे—

प्रकृतिस्त्वं पुमान् रुद्रस्त्वयि तद्वीर्यमाहितम् ।
त्वन्नाभिपङ्कजाज्जातः पञ्चवक्त्रः पितामहः ॥ इति ।
नावयोर्विद्यते भेदा मच्छक्तिस्त्वं न संशयः ।
त्वं चन्द्रमा अहं सूर्यः शर्वरीत्वमहं दिनम् ॥

इत्यादि पुराणे च । कौर्मवासिष्ठलैङ्गादित्यपुराणादिषु शिवनारायणयोर्भर्तृभार्याभावेन देवदारुवनप्रवेशोपवर्णनात् । लिङ्गपुराणे—

एष बीजी भगवान् वीजमहं योनिः सनातनः ।
स एवमुक्तो विश्वात्मा ब्रह्माविष्णुमपृच्छत ॥
भवान् योनिरहं बीजं कथं बीजी महेश्वरः ।
एतं मे सूक्ष्ममव्यक्तं संशयं छेत्तुमर्हसि ॥
ज्ञात्वा हि विविधोत्पत्ति ब्रह्मणो लोकतन्त्रिणः ।
इदं परमसूक्ष्मार्थं प्रश्नमभ्यवदद्धरिः ॥
अस्मान्महत्तरं भूतं गुह्यमन्यन्न विद्यते ।
महतः परमं धाम शिवमध्यात्मिनां पदम् ॥
द्वैधीभावेन चात्मानं प्रविभज्य व्यवस्थितम् ।
निष्कलं सूक्ष्ममव्यक्तं सकलस्तु महेश्वरः ॥
अस्य मायाविधिज्ञस्य अगम्यगहनस्य च ।
पुरा लिङ्गादभूद्वीजं प्रथमं त्वादिसर्गिकम् ॥
मम योनौ समासक्तं तद्वीजं कालपर्ययात् ।
हिरण्मये ह्यकूपारे योन्यामण्डमजायय ॥ इति ।

शिवक्षेत्रत्वस्फुटीकरणाच्च विष्णोरपि शिवशक्तित्वमसन्दिग्धम्, एकस्माच्छिवाद्धुभयोरभेदे परस्परमपि भेदायोगादभेद एव। तदुक्तमादित्यपुराणे—

"उमा या स हरिः साक्षात् यो हरिः सा शिवा स्मृता" इति। कौर्मे च—

न मे पश्यन्ति मुनयो देवाः शक्रपुरोगमाः।
नारायणात्मिका चैका मायाऽहं सा च या॥
न मे नारायणाद् भेदो विद्यते हि विचारतः।
तन्मायाऽहं पर ब्रह्म स विष्णुः परमेश्वरः॥ इति।

शक्तिविशिष्टश्च शम्भुरद्वैतो न ततः पृथगणुरप्यस्तीति वर्णयन्ति। परेत्वथर्वशिरसि प्रथमखण्डे "देवा ह वै स्वलोकमगमन् ते देवा रुद्रमपृच्छन् को भवानिति पृष्टवतो देवान् प्रति सोऽब्रवीत् अहमेकः प्रथममासं वर्तामि च भविष्यामि च नान्यः कश्चिन्मत्तो व्यतिरिक्त इत्यादिना एवं "मां यो वेद स सर्वान् देवान् वेद" इत्यन्तेन शिववचनेन शिवस्य सर्वात्मत्वं प्रतिपादितम्। अनन्तर "ततो देवा रुद्रं नापश्यन् ते देवा रुद्रं ध्यायन्ति ततो देवा ऊर्ध्वबाहवः स्तुन्वन्ती"ति देवैरुपास्यमानत्वं स्तूयमानत्वञ्च दर्शितम्।

ततश्च द्वितीय खण्डे "यो वै रुद्रः स भगवान् भूर्भुवः स्वर्यश्च ब्रह्मा तस्मै वै नमो नमः" इत्यारभ्य "यश्च विष्णुर्यश्च महेश्वरः" इत्यादि प्रकारेण ब्रह्मविष्णुरुद्रोमेन्द्रादीनां महाभूतादीनाञ्च तद्विभूतत्वं प्रथमखण्डोक्तसर्वात्मत्ववचनेन सिद्धमवयुत्यानुवादन्यायेन विशिष्य निरूपितम्। शास्त्रीयोऽयं न्यायः। समुदायादेकदेशं पृथक् कृत्वा विहितोऽनुवादोऽवयुत्यानुवादो निगद्यते।

तृतीयचतुर्थखण्डयोस्तदीयनामनिर्वचनमुखेन तस्य परभावः स्पष्टीकृतः पञ्चमखण्डे तस्योपासनादेव मोक्ष इत्यभिधाय पशुपतियोगात्मकतदुपास्तिप्रकारो दर्शितः। तदेवमादितः आरभ्यान्तं विमृश्यमानमथर्वशिरोजातं मूर्तित्रयादतिरिक्तः परमशिवः सर्वतो ज्यायस्त्वात्परमेश्वर इति स्पष्टीकरोति।

शान्तिपर्वणि—

क्लिश्यमानेषु जीवेषु तैस्तैर्भावैः पृथक् पृथक्।
दुर्गाण्यतितरेद् येन तन्मे ब्रूहि पितामह॥ इति।

इह च परत्र च दुर्गातितरणोपायं पृष्टवन्तं युधिष्ठिरं प्रति वर्णाश्रमधर्मादिक्रमेण—

य एनं संश्रयन्तीह भक्त्या नारायणं हरिम्।
ते तरन्तीह दुर्गाणि न मेऽत्रास्ति विचारणा॥

इत्यादिना नारायणपितामहशक्रभजनानां दुर्गतितरणोपायत्वोक्त्यनन्तरम्—

यं विष्णुरिन्द्रः शम्भुश्च ब्रह्मालोक पितामहः।
स्तुवन्ति विविधैः स्तोत्रैर्देवदेवं महेश्वरम् ॥
तमर्चयन्ति ये शश्वद् दुर्गाण्यतितरन्ति ते।

इति भीष्मवचनेन—

स एव भगवानीशः सर्वतत्त्वादिरव्ययः।
सर्वतत्त्वविधानज्ञः प्रधानपुरुषेश्ववरः ॥
सोऽसृजद् दक्षिणादङ्गाद् ब्रह्माणं लोकसंभवम्।
वामपार्श्वात्तथा विष्णुं लोकरक्षार्थमीश्वरम् ॥
युगान्ते चैव संप्राप्ते रुद्रं प्रभुरथाऽसृजत्।

इत्याद्यानुशासनिकेन वचनप्रपञ्चेन।

पाद्मे च—

पठ्यते सर्वसिद्धान्तै र्वेदान्तै यो मुनीश्वराः।
तस्मिन् भक्तिर्महादेवे मम धातुश्च निर्मला ॥

इत्यादिना सदाशिवस्वरूप।तिपादनान्तरं—

तस्य चेच्छाऽभवत्पूर्वं जगत्स्थित्यन्तकारिणी।
वामाङ्गादभवंस्तस्य सोऽहं विष्णुरिति स्मृतः ॥
जनयामासधातारं दक्षिणाङ्गात् सदाशिवः।
मध्यतो रुद्रमीशानं कालात्मा परमेश्वरः ॥

इत्यादिना श्रीकृष्णवचनेन च स्पष्टीकृतोऽयमर्थः। वायुसंहितायान्तु ब्रह्माण्डस्वरूपमुपपाद्याभिहितम्—

इतीदृशानामण्डानां कोषा ज्ञेयाः सहस्रशः।
सर्वगत्वात्प्रधानस्य तिर्यगूर्ध्वमधः स्थिता; ॥
तत्र तत्र चतुर्वक्त्रा ब्रह्माणो हरयो हराः।
सृष्टाः प्रधानेन सता लब्ध्वा शम्भोस्तु सन्निधिम् ॥

आदित्यपुराणे—

सहस्रकोटयः सन्ति ब्रह्माण्डस्तिर्यगूर्ध्वगाः।
ब्रह्माणो हरयो रुद्रास्तत्र तत्र व्यवस्थिताः ॥
आज्ञया देवदेवस्य महादेवस्य शूलिनः। इति।

कौर्मे—

ब्रह्मनारायणेशानां त्रयाणां प्रकृतौ लयः ।
एको हि भगवानीशः कालः कविरिति स्मृतः ॥ इति ।

वायुसंहितायां स्थलान्तरेऽपि—

ब्रह्मादयो हि लोकानां सर्गस्थित्यन्तहेतवः ।
निग्रहानुग्रहं प्राप्ताः शिवस्य वशवर्तिनः ॥
शिवः पुनर्न कस्यापि निग्रहानुग्रहास्पदम् ।
तस्मादतिशयैश्वर्यं तस्यैवेति सुनिश्चितम् ॥ इति ।

पराशरपुराणे च—

साक्षात्परतरस्यैव वस्तुनः सर्वसाक्षिणः ।
अस्ति मूर्तिः परा शुद्धा स्वतन्त्रा पापनाशिनी ॥
तस्यासाधरणी मूर्तिः साम्बा चन्द्रार्धशेखरा । इत्यारभ्य
ब्रह्मविष्णुमहेशानास्तां ध्यायन्ति निरन्तरम् । इत्यन्तेनोक्तम् ।

स्कान्दे—

उमार्धविग्रहा शुद्धा त्रिनेत्रा चन्द्रशेखरा ।
नीलग्रीवा परानन्दप्रमोदा ताण्डवप्रिया ॥
ब्रह्मविष्णुमहादेवैरुपास्या गुणमूर्तिभिः ।
सर्वमूर्तिविहीनस्य सर्वभूताधिपस्य च ॥
तथाऽप्येषा परा मूर्तिरित्येषा शाश्वती श्रुतिः । इति ।

शिवपुराणे—

सृष्टेः प्रवर्तको ब्रह्मा स्थितेर्विष्णुर्विमोहकः ।
संहारस्य तथा रुद्रस्तयोर्नित्यं नियामकः ॥
तस्मात् त्रयस्ते कथ्यन्ते जगतः कारणत्रयम् ।
कारणत्रयहेतुश्च शिवः परमकारणम् ॥ इत्यादि ।

इतिहासपुराणादिवचनकोटिभ्यो भूतित्रयोत्तीर्णो मायाशबलः परमात्मा परमशिवः सर्वेश्वरः । ब्रह्मादयस्तस्य गुणावतारा अंशावताराश्चेति कथ्यन्ते । मत्स्यादयो भैरवादयश्च तस्यैवांशांशाः । स एव सर्वशास्त्रतात्पर्य विषयोऽद्वितीयस्तुतीयश्च । शिवमद्वैतं चतुर्थं मन्यन्ते" इति श्रुतेः ।

ब्रह्मादयश्च शिवावतारत्वाद् विष्णोस्तदवतारा इव न ततो भिन्ना इति तेऽपि परमेश्वरत्वेन स्तूयन्ते विष्णुत्वेन विष्णोरवतारा इवेति न विरोधः ।

स च वस्तुतो नित्यशुद्धबुद्धमुक्तस्वभाव निराकारोऽपि भक्तानुग्रहाय स्वलीलया स्वीकृतदिव्यविग्रहः । तद्ध्यानेन च तत्स्वरूपज्ञानप्रादुर्भावान्निर्वाणपदावाप्तिः ।

तथा च श्रुतिः—

विविक्तदेशे च सुखासनस्थः,
शुचिः समग्रीवशिरःशरीरः।
अत्याश्रमस्थः सकलेन्द्रियाणि,
निरुध्य भक्त्या स्वगुरुं प्रणम्य॥
हृत्पुण्डरीकं विरजं विशुद्धं-
विचिन्त्य मध्ये विशदं विशोकम्॥
अचिन्त्य मव्यक्त मनन्तरूपं-
शिवं प्रशान्तममृतं ब्रह्मयोनिम्॥
तथादिमध्यान्तविहीनमेकं-
विभुं चिदानन्दमरूपमद्भुतम्।
उमासहायं परमेश्वरं विभुं-
त्रिलोचनं नीलकण्ठं प्रशान्तम्॥
ध्यात्वा मुनिर्गच्छति भूतयोनिं-
समस्तसाक्षिं तमसः परस्तात्॥ इति।

ब्रह्मादीनां तद्विभूतित्वमपि तत्रैवोक्तम्—

स ब्रह्मा स शिवःसेन्द्रः सोऽक्षरः परमः स्वराट्।
स एव विष्णुः स प्राणः स कालोऽग्निः स चन्द्रमाः॥
स एव सर्वं यद्भूतं यच्च भव्यं सनातनः।
ज्ञात्वा तं मृत्युमत्येति नान्यः पन्था विमुक्तये॥ इति॥

नचात्र स ब्रह्मेत्यादौ तत्पदानां सन्निहिते प्राप्यत्वेनोक्ते भूतयोनौ वृत्तेरुचितत्वाद् ब्रह्मादीनां तद्विभूतित्वमेवाम्नातं सिध्यति न तूपास्यविभूतित्वमिति मन्तव्यम्, भूतयोनिशब्दस्यापि यौगिकस्यासन्निहिते शिव एव वृत्तेः, तत्क्रतुन्यायात्तदुपासनया तत्प्राप्तेरेव युक्तत्वेन तस्य शिवान्यवृत्तित्वकल्पनायोगाच्च।

न च कथं ज्ञात्वा तमिति तज्ज्ञानान्मोक्षप्रतिपादनमितिवाच्यम्, सगुणब्रह्मवादे तद्बोधादेव मोक्षस्योपपन्नत्वात्। अथ निर्विशेषब्रह्मवादे सगुणज्ञानान्मोक्षो नोपपद्यते इति ज्ञात्वा तमित्यत्र तत्पदस्य निर्विशेषपरत्वस्यावश्यकंतया पूर्वेषामपि तत्परत्वं सिध्यतीति चेन्न, सदेव सोम्येदमग्रआसीदित्यादिश्रुतौ तत्तेऽसृजतेत्यादिवाक्यश्रुत तत्पदमात्रस्यैवानुपपत्त्या निर्विशेषे लक्षणावद् यत्रानुपपत्तिस्तस्यैव ज्ञात्वा तमिति तदस्य तत्र लक्षणायान्याय्यत्वेन योजनप्राप्यायां कान्वेयीं मलबन्धनस्यायुक्तत्वात्।

एवञ्चोमासहायत्वविशिष्टरूपेण परमशिवस्य ध्यानात्तमोंवश्यत्वरहितमखिलजगत्कारणं तमेव परमशिवमुपासकः प्राप्नोति। यद्भूतयः सर्वे ब्रह्मादयः क्रमेण निष्कृष्ट

चैतन्यैकतानस्य तस्य प्रत्यग्भावेन ज्ञानादयवर्गं प्राप्नुवन्तीतिश्रुत्यर्थः सम्पद्यते। एवमेव चास्याः श्रुतेरर्थो मानवपुराणे षष्ठाध्यायेन दर्शितः। तत्र हि कैवल्योपनिषत्प्रक्रिययैव—

पुराश्वलायनः साक्षान्मुनिः सत्यपरायणः।

भगवन्तं जगन्नाथमुपेत्य परमेष्ठिनम्॥ इत्यादिनाश्वलायनप्रश्नं तत्र परमेष्ठिनः प्रतिवचनमुखेन अचिन्त्यमव्यक्तमनन्तरूपमित्यादिना सप्रपञ्चं शिवध्यानप्रकारं च प्रदर्श्य—

इत्थं ध्यात्वा मुनिः साक्षात् साक्षिणं तमसः परम्।
भूतयोनिं पुरारातिं गच्छति स्वात्मविद्यया॥

योऽयं ध्येयतया प्रोक्तः शिवः साम्बः सनातनः।
ब्रह्मविष्णवादिरूपेण विभक्त इव संस्थितः॥

स ब्रह्मा स शिव इत्यारभ्य ज्ञात्वा तं मृत्युमत्येति नान्यः पन्था विमुक्तये इत्यन्तेनास्मदुक्तोऽर्थः स्पष्टमादर्शितः। तथा ब्रह्मगीतासु चैवमस्याः श्रुतेरर्थः प्रतिपादितः। तस्माद् ब्रह्मादीनां प्राप्यविभूतित्वमेव नोपास्यविभूतित्वमित्यसङ्गतम्।

प्राक् शिवधर्मोत्तरेषु यः शिवलोक उक्तः स कर्मयोगरतात्मनां शैवानाम्। ये तु "चिन्मात्रोऽहं सदाशिवः" इत्यादिश्रुतिमाश्रित्याहंग्रहोपासनारूपध्यानासक्तास्ते क्रतुन्यायेन शिवसायुज्यं सारूप्यं वा प्राप्य "भोगमात्रसाम्यलिङ्गाच्च" इति सूत्रोक्तरीत्या शिवसमभोगभाजो भवन्ति। तेषां परमशिवनित्याविर्भावस्थानभूतस्ततोऽप्युपरितनः परमशिवलोकस्तत्रैवाभिहितः।

ऊर्ध्वं शिवपुराज्ज्ञेयं स्थानत्रयमनुत्तमम्।
नित्यं परमशुद्धञ्च स्कन्दोमाशङ्करात्मकम्॥ इति

उपक्रम्य—

शुद्धस्फटिकसंकाशं जटामुकुटभूषितम्।
त्र्यक्षं चतुर्भुजं शान्तमक्षमालाधरं हरम्॥

वरदाभयहस्तञ्च त्रिशूलासक्तपाणिकम्।
ध्यायमानः शिवं नित्यं शिवसायुज्यमाप्नुयात्॥

ये संप्राप्ताः परं स्थानं ध्यनयोगरता नराः।
न तेषां पुनरावृत्तिर्घोरसंसारसागरे॥

सर्वज्ञाः सर्वगाः शुद्धाः परिपूर्णमहेश्वराः।
शिवतुल्यबलोपेता परां शिवपुरं गताः॥ इति।

स एव परमेश्वरः शिवपरपुराणादिषु प्रतिपाद्यः। स एव च लिङ्गादिषु ब्रह्मादिभिः सर्वैरुपास्यः।

ननु यद्युमासहायस्त्रिलोचनत्वादिविशिष्टमूर्तिशम्बलितः शिवपरेषु पुराणादिषु विविधमहिमाकरत्वेन प्रतिपादितो लिङ्गादिषूपास्यमानः पुरुषस्त्रिमूर्त्यतीतं परमेव-ब्रह्म, किन्नामरूपस्तर्हि स्रष्टृपालकयोर्ब्रह्मनारायणयोस्तृतीयः संहर्ता किञ्चास्य प्रति-पादकं पुराणादि उच्यते—यादृशं परमशिवस्यरूपं यानि च नामानि तादृशमेव यस्यापि-रूपं तान्येव च नामानि।

तदुक्तं सूतसंहितायाम्—

तप्तायःपिण्डवद्विप्रा रुद्रमूर्तिः परस्य तु।
मूर्त्यतुल्याऽन्यमूर्तिभ्यो लक्षणैर्मुनिसत्तमाः॥
परतत्त्वस्य नामानि प्रत्यासत्त्या मुनीश्वराः।
त्रिमूर्तीनां तु रुद्रस्याप्यभिधानानि सुव्रताः॥ इति।

शिवपुराणे च संहाररुद्रमाहात्म्यं प्रस्तुत्योक्तम्—

स एष भगवानीशस्तेजोराशिरनामयः।
अनादिनिधनो धाता भूतसंकोचकृद् विभुः॥
परमैश्वर्यसंयुक्तः परमेश्वरभावितः।
तच्छवत्यधिरतः शश्वत्तच्चिह्नैरपि चिह्नितः॥
तन्नामनामा तद्रूपस्तत्कार्यकरणक्षमः।
तत्तुल्यव्यवहारश्च तदाज्ञापरिपालकः॥ इति।

यद्यपि तस्यासाधारण्येन प्रतिपादकं पुराणं नास्ति तथापि प्रत्यासत्यतिशया-त्परमशिवपरेष्वेव पुराणेषु तत्प्रतिपादनं, यथाऽनुपदमेवोदाहृतं शिवपुराणे उक्तञ्च पराशरेण—

माहेश्वरपुराणानि समस्तानि महामुने।
असाधारणया मूर्त्या नाम्ना साधारणेन च॥
वदन्ति परमं तत्त्वं शिवं साम्बं त्रिलोचनम्।
त्रिमूर्तीनां हरं चापि तदंशं तस्य वैभवम्॥
तदंशस्याभिमानञ्च वदन्ति च महामुने। इति।

एवमाराधनमपि तस्य परमशिवाभिव्यक्तिस्थानेषु लिङ्गादिष्वेव। एवं परमशिवस्य गुणरुद्रस्य च नामरूपादिसाम्यादेव स्फुटं ब्रह्मविष्णुभ्यां प्रत्यासत्त्यतिशया-वगमाद्विशिष्य परमशिवाभेदेन गुणरुद्रस्य पुराणादिव्यवहारः। शैवानां च तत्राभिमा-

नातिशयो गुणचरितादिसाधारणव्यपदेशश्च । तत एव केषाञ्चिदस्यापि विवेकाग्रहः । अथ पुराणादि प्रसिद्धासु शैवीषु काः परमशिवमूर्तयः । केचिदाहुः—

आनन्दताण्डवविग्रहो दक्षिणामूर्तिविग्रहः ताण्डवपरोमार्धविग्रहश्चेति विग्रह त्रयमेव परमशिवस्यान्ये गुणरुद्रस्येति तन्न रोचयामहे, योगियाज्ञवल्क्येन—

पृथिव्यां वायुमारोप्य लकारेण समान्वितम् ।
ध्यायेत् चतुर्मुखाकारं ब्रह्माणं परमेष्ठिनम् ॥
धारयेत् पञ्च घटिका धारणात्सिद्धिमाप्नुयात् ।
वारुणे वायुमारोप्य वकारेण समन्वितम् ॥
स्मान् नारायणं सौम्यं चतुर्बाहुँ करीटिनम् ।
शुद्धस्फटिकसंकाशं पीतवाससमच्युतम् ॥
धारयेत् पञ्च घटिकाः सर्वपापैः प्रमुच्यते ।
वह्नौ चानिलमारोप्य रेफाक्षरसमन्वितम् ।
त्रिनेत्रं वरदं रुद्रं तरुणादित्यसन्निभम् ॥
भस्मोद्धूलितसर्वाङ्गं सुप्रसन्नमनुस्मरन् । इत्युक्त्वा ।
आकाशे वायुमारोप्य हकारेण समन्वितम् ।
बिन्दुरूपं महादेवं व्योमकारं सदाशिवम् ॥
शुद्धस्फटिकसंकाशं बालेन्दुकृतशेखरम् ।
पञ्चवक्त्रधरं सौम्यं दशबाहुं त्रिलोचनम् ॥
सर्वायुधोद्यतकरं सर्वभूषणभूषितम् ।
उमार्धदेहं वरदं सर्वकारणकारणम् ॥
चिन्तयंश्चित्तविन्यस्तं मूहूर्तमपि धारयेत् ।
स एवमुक्त इत्युक्तस्तान्त्रिकेष्वपि शिक्षितैः ॥

इति परमशिवस्य पञ्चवक्त्र सदाशिवमूर्तेरपि प्रतिपादनात् । वायुसंहितायाञ्च यागेश्वराख्यपूजाविधाने तथैव तस्याः प्रतिपादनात् ।

कूर्मपुराणे च नीललोहितकारितब्रह्मपञ्चमशिरोलवन प्रस्तावे—

अथाऽप्यपश्यद्गिरिशं मण्डलान्तरसंस्थितम् ।
समासीनं महादेव्या महादेवं सनातनम् ॥ इत्यादिना ।

एकासनस्थितोमासहायशूलधरमूर्तेरपि तदीयायाः प्रतिपादनात् । तस्माद् यथागमाचार्योपदेशमन्येऽपि विग्रहाः परमशिवस्य बोद्धव्याः ।

यानि तु विष्णोर्मूर्तित्रयपरत्वप्रतिपादकानि वचनानि कैश्चिदुपन्यस्तानि तानि तस्यानिरुद्धादिपरत्वबोधकतयाऽपि चरितार्थानि न मूर्तित्रयपरत्वं व्यवस्थापयितुं क्षमन्ते।

तथा हि—शिवस्य विष्णुरुद्रवेधस इव तेषामपि सन्ति व्यूहा जगतां हरण-भरणसमुत्पादनेष्वधिकृता वायुसंहितादिप्रसिद्धाः ब्रह्मणो विराट्कालपुरुषाख्यास्त्रयः। विष्णोः संकर्षणप्रद्युम्नानिरुद्धाख्याः। रुद्रस्य हरमृडभवाख्याः।

ते च दक्षमन्वन्तकादिवत् सृष्ट्यादिष्ववान्तराधिकारिणः। एवं विष्णोस्त्रि-मूर्तिपरत्वपराणि वचनानि स्वव्यूहत्रयपरत्वपराण्युपपद्यन्ते। तद्व्यूहानामपि सर्गाद्यधिकारसाम्याद् ब्रह्मादिव्यपदेशोपपत्तेः,

एका भगवतीमूर्तिर्ज्ञानरूपा शिवाऽमला।
वासुदेवाभिधाना सा गुणातीता सुनिष्कला॥
द्वितीया रुद्रसंज्ञा स्यात्तामसी शेषसंज्ञिता।
निहन्ति सकलं चान्या वैष्णवी परमा तनुः॥
सत्त्वोद्रिक्ता तृतीयान्या या प्रद्युम्नेति संज्ञिता।
जगत्पालयते सर्वं स विष्णोः प्रकृतिर्ध्रुवा॥
चतुर्थी वासुदेवस्य मूर्तिर्ब्रह्मेति संज्ञिता।
राजसी चानिरुद्धाख्या परुषा पुष्टिकारिका॥

इति कौर्मे तेषां तद्व्यपदेशदर्शनाच्च। एवं ब्रह्मणस्त्रिमूर्तिपरत्ववचनानामपि उपपत्तिरुन्नेया।

वायुसंहितायाम्—

"तदण्डेऽस्मिन्विवृद्धोऽभूत् क्षेत्रज्ञो ब्रह्मसंज्ञितः" इति ब्रह्माणं प्रस्तुत्य,

त्रिधा विभज्य चात्मानं त्रैलोक्ये संप्रवर्तते।
सृजते ग्रसते चैव रक्षते च त्रिभिः स्वयम्॥ इत्यादिना तद्व्यूहान् प्रदर्श्य,

सत्त्वं रजश्च ब्रह्मत्वे कालत्वे च तमोरजः।
विष्णुत्वे केवलं सत्त्वं गुणवृत्तिस्त्रिधा विभोः॥ इति

तद्व्यूहानां गुणविभागश्लोकेष्वपि ब्रह्मादिशब्दप्रयोगात्। तर्हि शिवस्य त्रिमूर्ति-परत्ववचनान्यपि संहाररुद्रव्यूहभूतभवमृडहरपरत्वपराणीति संहाररुद्र एव त्वदभिमतः शिवोऽस्तु तस्य गुणमूर्तिभ्यः परत्वे न मानमिति चेन्न,

सृजत्यशेषमीशस्य शासनाच्चतुराननः।
तिसृभिर्मूर्तिभिश्चापि पाति चान्ते निहन्ति च॥

विष्णुः पालयते विश्वं विश्वयोनेर्नियोगतः।
सृजते ग्रसते चापि स्वकाभिस्तनुभिस्त्रिभिः॥
हरत्येतत् जगत् सर्वं हरस्तस्यैव शासनात्।
सृज्यत्यपाञ्च विश्वात्मा त्रिधाभिन्नस्तु रक्षति॥

इति शिवपुराणे स्वस्वव्यूहसंहितानां ब्रह्मविष्णुरुद्राणां शिवनियोगेन स्वस्वकृत्ये प्रवृत्त्युपन्यासेन तत्रैव योगेश्वराख्यपूजाविधौ स्वस्वव्यूहावरणकानां तेषां शिवावरणे पूजाविधानेन योगियाज्ञवल्क्येन तद्रूपोपन्यासेन प्रसिद्धानेव प्रस्तुत्य सदाशिवस्य तेभ्यः परत्वकथनेन च तस्य त्रिमूर्त्यतिरेकसिद्धेः। तस्मात् त्रिमूर्तिपरः परमशिवः सर्वनियन्तृत्वात्सर्वेश्वर इत्युपपादयन्ति।

गाणपतास्तु—

त्रिमूर्त्यतिरिक्तः तुरीयः परमशिवः साक्षात् परब्रह्ममूर्तिः श्रीगणेश एव। तदुक्तं गणपत्यथर्वशीर्षत्वं वाङ्मयस्त्वं चिन्मयस्त्वंमानन्दमयस्त्वं ब्रह्ममयस्त्वं सच्चिदानन्दाद्वितीयोऽसि त्वं प्रत्यक्षं ब्रह्मासि त्वं ज्ञानमयो विज्ञानमयोऽसि सर्वं जगदिदं त्वत्तो जायते सर्वं जगदिदं त्वत्तस्तिष्ठति सर्वं जगदिदं त्वयि प्रत्येति त्वं भूमिरापोऽनलोऽनिलश्चत्वारि वाक्पदानि त्वं गुणत्रयातीतस्त्वं देहत्रयातीतस्त्वं कालत्रयातीतस्त्वं मूलाधारस्थितोऽसि नित्यं शक्तित्रयात्मकः त्वां योगिनो ध्यायन्ति नित्यं त्वं ब्रह्मा त्वं विष्णुस्त्वं रुद्रस्त्वमिन्द्रस्त्वमग्निस्त्वं वायुस्त्वं सूर्यस्त्वं चन्द्रमास्त्वं भूर्भुवः स्वरोम्" इत्यादि। याश्च मूर्तयो दिव्याः परमशिवस्य निरूपिताः शैवैस्ताः श्रीगणेशस्यैव। इयं द्विरदास्या तु परमा मूर्तिः। इदं च रहस्यं परमगोपनीयं केषाञ्चिदेव सेवितसद्गुरूणां मेधागोचरो भवति।

अत एव परमशिवस्य लीलाविग्रहवर्णनयप्रसङ्गे केनचित्परमशैवेनोक्तम् अन्येऽपि सदाशिवस्य लीलाविग्रहाः सन्तिगुरूपदेशमात्रगम्या अतिगोपनीयत्वान्नेह प्रकाश्यन्ते" इति।

अयमेव वैष्णवैः त्रिमूर्त्यतिरिक्तस्तुरीयो वासुदेवाभिधानो महाविष्णुरित्युच्यते। नन्तु शिवद्वयं विष्णुद्वयं वाऽस्ति येनैकः शिवो विष्णुर्वा मूर्तित्रयमध्यगो द्वितीयस्तदतिरिक्त इत्युपगम्यते। एवञ्च श्रीगणेश एव साक्षात्परं ब्रह्म। ब्रह्मादीनान्तु तदंशत्वेन ब्रह्मत्वं व्यपदिश्यते विष्णवंशानामिव विष्णुत्वम्।

"नमस्ते गणपते त्वमेव प्रत्यक्षं ब्रह्मासि, त्वामेव प्रत्यक्षं बह्म वदिष्यामि, ऋतं वदिष्यामि" इत्यादि। अत्र विशेषसम्बन्धिभ्यामन्ययोगव्यवच्छेदिभ्यामेवकाराभ्यां पार्थ एव धनुर्धर इत्यत्रैवकारेण पार्थादन्यत्र धनुर्धरत्वस्येव गणपतेरन्यत्र साक्षाद्ब्रह्मत्वस्य योगो व्यवच्छिद्यते। उपबृंहितश्चायमर्थः—

निर्गुणो निरहंकारः निर्विकल्पो निराकृतिः।
निरामयो निरीहो यो गणेशोऽसौ निगद्यते॥

इत्यादिना स्कान्दे। अतः प्रलये प्रकृतौ लीनानां ब्रह्मादीनां महाकल्पादौ तेन संक्षोभितायाः प्रकृतेराविर्भावात्तदधीन आविर्भावः। तदधीनतत्तद्गुणप्राप्त्या सृष्ट्यादिसामर्थ्यमपि तेषां तदधीनमेव। तन्नियमिताश्च सूर्यादयः स्वस्वाधिकारेषु अवस्थितास्तद्भयेन तत्कृतां मर्यादां नातिक्रमन्ते। इदं सर्वं श्रीगणेशपुराणे तत्तत्स्थलेषु प्रतिपादितम्। तत्र तावत् प्रस्तुत्य कथनान्तरम्—

एवं सर्वे विनश्यन्ति आब्रह्मस्थावरादयः।
एवं मायामये नष्टे विकारेऽसौ गजाननः॥

अणुभ्योऽणुतरं रूपं कृत्वा क्वापि व्यवस्थितः। इत्यादिना गणेशमात्रावशेषमवाङ्मनसगम्यस्वमहिमावस्थितत्वलक्षणमुक्त्वा,

वैकारिकं पुनारूपं यदानन्दमये स्थितम्।
मायाविकारमासाद्य तदेवाऽभूद् गजाननः॥

तत एव च सम्भूता गुणाः सत्त्वं रजस्तमः।
ततस्त्रयः समुत्पन्ना विष्णुर्ब्रह्मा हरोऽपि च॥

इत्यादिना मायाविकारे क्षणमाश्रिते स्वलीलाविग्रहाविर्भावमभिधाय तदवच्छिन्नात्तस्माद् ब्रह्मादीनामुत्पत्तिं च प्रतिपाद्य,

ततस्तन्मायया भ्रान्ता बभ्रमुस्ते सुरास्त्रयः।
तमेव जनकं स्वस्य द्रष्टुं प्रष्टुं समुत्सुकाः॥

इत्यादिना तत्कृतं तदन्वेषणं तपसाप्रसादिततदनुग्रहेण तत्साक्षात्कारं च वर्णयित्वा तैः कृतेन स्तवराजेन प्रसन्नात् श्रीविनायकात्तेषां बहुवरलाभमुक्त्वा च "किञ्चास्माभिः प्रकर्तव्यमित्याज्ञापयतु नो भवान्" इत्यादि तत्प्रार्थनानन्तरम्—

सृष्टिकर्ता भव ब्रह्मन् रजोगुणसमुद्भवः।
पालनं कुरु विष्णो त्वं व्यापकः सत्त्वसंश्रयः॥

हर संहर सर्वत्वं तमोगुणसमुद्भवः। इति तत्प्रसादेनैव तेषां सर्वसामर्थ्यं तदाज्ञयैव च तत्तत्कार्ये प्रवृत्तिरिति प्रतिपादितम्। एवं तत्रैव स्थलान्तरेऽप्यभिहितम्—

नित्यत्वान्निर्गुणत्वादनादित्वाच्च सर्वतः।
गणेशस्य स्वरूपन्तु वक्तुं केनाऽपि नेश्यते॥
तथाप्युपासनासक्तैः सगुणं तन्निरूप्यते।
ओंकाररूपी भगवान् वेदादौ यः प्रतिष्ठितः॥
यं सदा मुनयो देवाः स्मरन्तीन्द्रादयो हृदि।
यं पूजयन्ति सततं ब्रह्मेशानलविष्णवः॥
यो हेतुः सर्वजगतां सर्वकारणकारणम्।

यदाज्ञया कः सृजतेऽथ विश्वं-
यदाज्ञया पाल्यतेऽथ विष्णुः।
यदाज्ञया संहरते हरोऽपि-
यदाज्ञया संभ्रमते दिनेशः।
यदाज्ञया वाति समीरणोऽपि-
यदाज्ञयाऽऽपः प्रवहन्ति दिक्षु॥ इति।

किञ्च श्रेयःकामैः सर्वैरपि तत्तत्स्वाभिलषितफलप्रदः श्रीगणपतिरेवाराध्यः। तत्पूजां विनाऽन्यपूजनस्य वैयर्थ्यस्मरणेन फलजनकत्वायोगात्। अवश्यापेक्षितानपेक्षितयोरपेक्षितं समर्पणीयमिति न्यायेन कृताकृतप्रसङ्गी यो विधिः स नित्य इति न्यायेन च गणेशाराधनस्यावश्यकत्वात्। कृते च गणेशाराधने—

विद्यार्थी लभते विद्यां धनार्थी लभते धनम्।
पुत्रार्थी लभते पुत्रान् मोक्षार्थी परमं पदम्॥

इत्यादिवचनेभ्यो गणेशाराधनादेव सर्वेष्टलाभसंभवेन,

अनधीते महाभाष्ये व्यर्था स्यात्पदमञ्जरी।
अधीतेऽपि महाभाष्ये व्यर्था स्यात्पदमञ्जरी॥

इतिन्यायेनेतराराधने प्रयोजनाभावात्।

सूर्याद्याराधनफलारोग्यादिमोक्षान्तकथनान्तरं "सर्वमिच्छेद्गणाधिपात्" इति स्मरणादपि सर्वेश्वरश्रीगणेशाराधनेनैव सर्वाभीष्टसिद्धेरलमन्याराधनेन। आराधितमेव भवति सर्वं तस्मिन्नाराधिते तुष्टे च तुष्टम्।

तथा च भविष्ये—

पूजयेद् यस्तु विघ्नेशमेकदन्तमुमासुतम्।
नश्यन्ति तस्य विघ्नानि न चारिष्टं कदाचन॥
यश्चोपवासं कृत्वा तु चतुर्थ्यां पूजयेन्नरः।
सर्वे तस्य समारम्भाः सिध्यन्ते नात्र संशयः॥
यस्यानुकूलो विघ्नेशः शिवयोः कुलनन्दनः।
तस्यानुकूलं सर्वं स्याज्जगद्वै सर्वकर्मसु॥
एकदन्ते जगन्नाथे गणेशे तुष्टिमागते।
पितृदेवमनुष्याद्या सर्वे तुष्यन्ति भारत॥
तस्मादाराधयेदेनं सदा भक्तिपुरस्सरम्। इति,

नारसिंहे च—

यत्फलं सर्वतीर्थेषु सर्वयज्ञेषु यत्फलम्।
तत्फलं समवाप्नोति स्तुत्वा देवं विनायकम्॥
विषमं न भवेत्तस्य न च गच्छेत्पराभवम्।
न च विघ्नो भवेत्तस्य जातो जातिस्मरो भवेत्॥

इति। किञ्चेतराराधनफलमारोग्याद्येकैकमपि गणपतिप्रसादं विना न न सिध्यति। किं बहुना तत्प्रसादमन्तरेण न काचित् क्रियाऽपि सिध्यति तत्फलस्य तु का कथा।

अतः सर्वं परित्यज्य विनायकाराधनमेव कर्तव्यम्। यदि च जन्मान्तरीय संस्कारवशाद् हरिहराद्याराधने चित्तं प्रसरति तदाऽपि निर्विघ्नं तत्सिद्धयर्थं तत्साफल्यार्थञ्च विघ्नराजाराधनं विधेयमेव। यस्य च तस्मिन् भक्तिरेव नास्ति तद्दर्शनेनान्येषां विघ्ना भवन्ति तस्य तु का कथा। अतस्तद्दर्शनमपि नानुष्ठेयम् तथा च गणेशपुराणे व्यासं प्रति ब्रह्मवचनम्—

योऽनादिनिधनो देवो जगत्कर्ता जगन्मयः।
जगद्धाता जगद्धर्ता सदसद्व्यक्तिरव्ययः॥
योऽकर्तुमन्यथाकर्तुं शक्तः कर्तुं च सर्वदा।
यस्याज्ञावशगा नित्यं देवा इन्द्रपुरोगमाः॥
अहं विष्णुश्च रुद्रश्च सूर्याग्निवरुणादयः।
योऽविघ्नकर्ता भक्तानां विघ्नकर्तेतरस्य च॥
तस्मिंस्त्वं कृतवान् गर्वं स्वविद्याबलसंश्रयात्।
सर्वज्ञाताऽभिमानेन न कृतं पूजनं त्वया॥
स्मरणं वा गणेशस्य नारम्भेऽन्यस्य वा त्वया।
आरम्भे सर्वकार्याणां प्रवेशेवाऽथ निर्गमे॥
श्रौते स्मार्ते लौकिके यः स्मृतोऽविघ्नं करोति च।
यमाहुः परमानन्दं यमाहुः परमां गतिम्॥
यमाहुः परमं ब्रह्म वेदशास्त्रार्थदर्शिनः।
तं गच्छ शरणं वत्स द्विरदाननमादरात्॥
स चेत्प्रसन्नो भगवान् वाञ्छितं ते करिष्यति।
नोचेद् वर्षसहस्रेण न स्ववाञ्छामवाप्स्यसि॥
जीवन्मुक्ता भवन्त्येव यदुपासनया मुने।
श्रेष्ठा धन्याश्च ते पूज्यास्ते नमस्याः सुरैरपि॥

यदुपासनया दास्यं तेषां कुर्वन्ति सिद्धयः।
इच्छाविहाराः सर्वज्ञा नानारूपा भवन्ति ते ॥
ये कुर्वन्ति गणेशस्य भक्तिं भावसमन्विताः।
न येषां भक्तिलेशोऽपि तेषां जन्म निरर्थकम् ॥
नालोकयेन्मुखं तेषां विमुखा ये गजाननात्।
तेषां दर्शनमात्रेण विघ्नाः हि स्युः पदे पदे ॥
विघ्नाः ह्युपशमं यान्ति तदुपासकदर्शनात्।
तान्नमस्यन्ति भूतानि स्थावराणि चराणि च ॥ इति।

अपि च शिवादीनामपि त्रिपुरवधादीनि कार्याणि गणेशपूजनजन्यतत्प्रसादसाध्यानि चेत्तदुपासकानां का कथा। तथा च लैङ्गे—

संपूज्यं हि स देवसङ्घैर्विनायकं नायकमीश्वराणाम्।
गणेश्वरैरेव गिरीन्द्रधन्वा पुरत्रयं दग्धुमथो जगाम ॥ इत्यादि।

किं बहुना तत्प्रसादमन्तरेण न विधातुरपि कार्यसिद्धिः तस्मिन् प्रसन्ने तु क्षुद्रजन्तूनामपि कार्याणि सिध्यन्ति। तदुक्तं सर्वज्ञमुनिभिः—

प्रारम्भाः फलिनः प्रसन्नहृदयो यश्चेत्तिरश्चामपि,
नोचेद्विश्वसृजोऽप्यलं विफलतामायान्त्युपायोद्यमाः।
विश्वैश्वर्यमतो निरङ्कुशमभूद्यस्यैव विश्वप्रभोः,
सोऽयं विश्वहिते रतो विजयते विघ्नेश्वरो विश्वकृत् ॥

शिवपुत्रभावस्तु तस्य ब्रह्मपुत्रभाव इव हरस्य, हरेः कश्यपपुत्रभाव इव च भक्तवात्सल्येनेति ज्ञेयम्।

यथा च काशीखण्डे—

दिवोदासोच्चाटनार्थं प्रेषितेषु योगिन्यादित्यब्रह्मादिषु केनापि कार्येऽसंपादिते तदर्थं प्रेषितस्य हरेः साहाय्यार्थं श्रीगणेशः प्रेषितः तेन च तदुच्चाटने कृते सर्वैर्देवैः सह शिवः श्रीकाश्यामागत्य—

पश्यतां सर्वदेवानामवरुह्य वृषेन्द्रतः।
परिष्वज्य गणाधीशं प्रोवाच वृषभध्वजः ॥
यदहं प्राप्तवानस्मि पुरीं वाराणसीं शुभाम्।
पश्याम्यतीव दुष्प्राप्यां स प्रसादोऽस्य वै शिशोः ॥

इत्यादिना बहुशिष्टाचारं विधाय "परितुष्टाव संहृष्टः स्पष्टगीर्भिर्गजाननम्" इत्युक्तम्। तस्मिंश्च स्तवे विचार्यमाणे जगत्सर्गादिहेतुवेदान्तवेद्यतुरीयब्रह्मरूपत्वं

श्रीगणेशस्यैव ब्रह्मादीनाञ्च तद्विभूतित्त्वं सर्वपापयुतानामपि तदुपासनया मुक्तिभाक्त्वं तस्य च शिवपुत्रभावः तदनुज्ञया तत्कार्यसाधनादिकञ्च भक्तवात्सल्येनैवेति प्रतीयते। तथाहि—

जय विघ्नकृतामाद्य भक्तनिर्विघ्नकारक।
अविघ्नविघ्नशमन महाविघ्नैकविघ्नकृत्॥
जय सर्वग सर्वेश सर्वबुद्ध्येकशेवधे।
सर्वमायाप्रपञ्चज्ञ सर्वकर्माग्र पूजित॥
जय सृष्टिकृता वन्द्य जय स्थितिकृता नुत।
जय संहृतिकृत्स्तुत्य जय सत्कर्मसिद्धिद॥

ये त्वां नमन्ति करुणामय दिव्यमूर्ते,
सर्वैनसामपि भुवो भुवि मुक्तिभाजः।
तेषां सदैव हरसीह महोपसर्गान्,
स्वर्गापवर्गमपि सम्प्रददासि तेभ्यः॥
त्वं कारणं परमकारणकारणानां-
वेद्योऽसि वेदविदुषां सततं त्वमेव।
त्वं मार्गणीयमसि किञ्चन मूलवाह्यं-
वाचामगोचर चराचरदिव्यमूर्ते॥
वेदा विदन्ति न यथार्थतया भवन्तं-
ब्रह्मादयोऽपि न चराचरसूत्रधार।
त्वं हंसि पासि विदधासि समस्तमेकः,
कस्ते स्तुतिव्यतिकरो मनसाऽप्यगम्य॥
त्वद्दुष्टदृष्टिविशिखैर्निहतान्निहन्मि,
दैत्यान् पुरान्धक जलन्धरमुख्यकांश्च।
कस्याऽस्ति शक्तिरिह यस्त्वदृतेऽपि तुच्छं-
वाञ्छेद् विधातुमिह सिद्धिद कार्यजातम्॥ इत्यादि।

अत्र हि निरङ्कुशैश्वर्यवत्त्वेन सर्वेषां शुभाशुभकार्येषु प्रवर्तकत्वात्तत्फलप्रदत्वात् जगत्कारणब्रह्मादिकारणत्वाच्च सर्वोत्तमत्वं श्रीगणाधिपतेरभिहितम्।

एवमन्येष्वपि श्रुतीतिहासपुराणागमादिषु श्रीविनायकस्य सर्वोत्तमत्वं प्रतिपाद्यते। ग्रन्थभूयस्त्वभयान्नेह तद्वचनानि लिख्यन्त इति दिङ्मात्रं प्रदर्शितम्।

तस्मात्सर्वनियन्ता सर्वकर्मफलप्रदः सर्वेश्वरः सर्वोपास्यः सर्वशास्त्रतात्पर्यभूमिः श्रीगणेश एवेति मन्यते। परमशिवविभूतिरूपस्यापि श्रीगणेशस्य तत्त्वेन वर्णनमुपा-

सनाथं वस्तुतस्तदभेदाभिप्रायञ्च । सर्वत्र तत्पूजनविधानमपि तत्पूजनस्य तत्तत्कर्मोपासनाद्यङ्गत्वात् ।

न चैतावता तेषामननुष्ठानप्रसक्तिः । प्रयाजादिषु कृतेषु दर्शादीनामप्यननुष्ठानप्रसङ्गात्, इतरोपासनकर्मादिविधायकशास्त्राप्रामाण्यापत्तेश्च । सर्वमिच्छेत्तु गणाधिपादित्यादिस्मृतिरपि विनायकाराधनस्य परम्परया सर्वत्रोपयोगवर्णनपरा नत्वितरोपासनानिषेधपरा, तद्विधायकवाक्यविरोधात् ।

किञ्च गणेशप्रतिपादकवाक्येषु प्राक्प्रतिपादितानि परमशिवस्य नामानि रूपाणि च दृश्यन्ते । अतो न स मूर्तित्रयपरः परमशिवः किन्तु शम्भुशिवशङ्करहरभवादिनामा त्रिनेत्रचन्द्रशेखरनीलकण्ठादिविग्रहो विधेरपि शास्ता हरेरपि वरप्रदस्तेन स्तुतश्च श्रीकालभैरव एव वेदान्तप्रतिपाद्यो मुमुक्षुभिराराध्यो मूर्तित्रयपरः परमशिवः ।

तत्र विधातृशास्तृत्वं तस्य सर्वेश्वरत्वाभिमाननिवारणफलकम् ।

कौर्मे स्मर्यते—

स कृत्वा सुमहद्युद्धं ब्रह्मणा लोकभैरवः ।
चकर्त तस्यवदनं विरिञ्चेरपि पञ्चमम् ॥
निवृत्तवदनो देवो ब्रह्मा देवेन शम्भुना ।
स माराम्बेशयोगेन जीवितं प्राप विश्वकृत् ॥ इति ।

स्वकृतमर्यादापालनार्थं प्रायश्चित्तमाचरतो विष्णुलोकं गतस्य तस्य स्वप्रतिरोधकविष्ण्वंशभूतविष्वक्सेनशासनेऽनर्थाद्विष्णोरपि शास्तृत्वं तत्रैवोक्तम्—

स देवदानवादीनां देशानत्येत्य शूलवान् ।
जगाम विष्णोर्भुवनं यत्रास्ते पुरुषोत्तमः ॥
सम्प्राप्य दिव्यभुवनं शङ्करो लोकशङ्करः ।
सहैव भूतप्रवरैः प्रवेष्टुमुपचक्रमे ॥
अविज्ञाय परं भावं दिव्यं तत्पारमेश्वरम् ।
न्यवारयत् त्रिशूलाङ्कं द्वारपालो महाबलः ॥
शङ्खचक्रगदापाणिः पीतवासा महाबलः ।
विष्वक्सेन इति ख्यातो विष्णोरंशसमुद्भवः ॥
अथ तं शङ्करगणो युयुधे विष्णुसम्भवम् ।
भीषणो भैरवादेशात्कालवेल इति श्रुतः ॥
विजित्य कालवेलं तं क्रोधसंरक्तलोचनः ।
रुद्रायाभिमुखं रौद्रं चिक्षेप च सुदर्शनम् ॥

अथ देवो महादेवस्त्रिपुरारिस्त्रिशूलधृक् ।
तमापतन्तं सामर्षमालोकयदमित्रजित् ॥

तदन्तरे महद्भूतं युगान्तदहनोपमम् ।
शूलेनोरसि निर्भिद्य पातयामास तं भुवि ॥ इत्यादि ।

ब्रह्महत्याव्रताचरणं तस्य लोकहितार्थमेवेत्यपि तत्रोक्तम्—

ततः सर्वाणि गुह्यानि तीर्थान्यायतनानि च ।
जगाम लीलया देवो लोकानां हितकाम्यया ॥ इति ।

एवं काशीखण्डेऽपि—

वामाङ्गुलिनखाग्रेण चकर्त च शिरो विधेः ।
यदङ्गमपराध्नोति कार्यं तस्यैव शासनम् ॥

अतो येन कृता निन्दा तच्छिन्नं पञ्चमं शिरः ।
यज्ञमूर्तिधरो विष्णुस्ततस्तुष्टाव शङ्करम् ॥
भीतो हिरण्यगर्भोऽपि जजाप शतरुद्रियम् । इति ।

ब्रह्मशास्तृत्वादिकं तस्य प्रदर्श्य पूर्ववल्लोकानुग्रहेण ब्रह्महत्याव्रताचरणाय बहुलोकान् पर्यटन् विष्णुलोकं गतस्तेन नमस्कृतः स्तुतश्चेत्युक्तम् । ते च बहुविधाः स्तवा यद्यपि ग्रन्थे न लिखितास्तथापि तदनन्तरं शिष्टाचारव्याजेन कृतायां स्तुतौ सर्वशास्त्रतात्पर्यभूमिभूमब्रह्ममुक्तगम्यमूर्तित्रयपरसर्वान्तर्यामिसर्वात्मपरमशिवरूपत्वं श्रीकालभैरवस्य प्रतिपादितम् । तद्यथा—

अथायान्तं महाकालं त्रिनेत्रं सर्पकुण्डलम् ।
पपात दण्डवद् भूमौ दृष्ट्वा तं गरुडध्वजः ॥

शिरस्यञ्जलिमारोप्य स्तुत्वा बहुविधैः स्तवैः ।
क्षीरोदमथनोद्भूतां प्राह पद्मालयां हरिः ॥

प्रिये पश्याम्बुजनयने धन्याऽसि सुभगेऽनघे ।
धन्योऽहं देवि सुश्रोणि यत्पश्यावो जगत्पतिम् ॥

अयं धाता विधाता च लोकानां प्रभुरीश्वरः ।
अनादिः शरणः शान्तः परः षड्विंशसम्मतः ॥

सर्वज्ञः सर्वयोगीशः सर्वभूतैकनायकः ।
सर्वभूतान्तरात्माऽयं सर्वेषां सर्वदः सदा ॥

यं विनिद्रा जितश्वासाः शान्ताध्यानपरायणाः ।
धिया पश्यन्ति हृदये सोऽयमद्य निरीक्ष्यताम् ॥

यं विदुर्वेदतत्त्वज्ञा योगिनो यतमानसाः ।
अरूपो रूपवान् भूत्वा सोऽयमायाति सर्वगः ॥
अहो विचित्रं देवस्य चेष्टितं परमात्मनः ।
यस्याख्या ब्रुवतो नित्यं न देहः सोऽपि देहधृक् ॥
यं दृष्ट्वा न पुनर्जन्म लभ्यते भुवि मानवैः ।
सोऽयमायाति भगवांस्त्र्यम्बकः शशिभूषणः ॥ इति ।

पूर्वंपरमशिवनिरूपणप्रस्तावे "ध्यात्वा मुनिर्गच्छती" त्यादिना या परमशिवोपासना प्रदर्शिता साऽत्र "यं विनिद्रा जितश्वासाः" इत्यादिनोपबृंहिता इत्ययमेव परमशिवः । ब्रह्महत्याव्रताचरणं तस्य लोकसंग्रहाय क्रीडामात्रमित्यपि तत्रैव तं प्रति हरिणा विस्तरेणोक्तम्—

किमिदं देवदेवेन सर्वज्ञेन त्वया विभो ।
क्रियते यजतां धात्रा सर्वपापहराव्यय ॥
क्रीडेयं तव देवेश त्रिलोचनमहामते ।
यथेच्छसि तथा क्रीड सर्वविष्टपनायक ॥
नाभीकमलकोशात्तु कोटिशः कमलासनान् ।
कल्पे कल्पे सृजामीश त्वन्नितोगवलाद्विभो ॥
त्यज मायां महादेव दुस्तरानकृतात्मभिः ।
संहारकाले संप्राप्ते स देवानखिलान् मुनीन् ॥
लोकान् वर्णाश्रमवतो हरिष्यसि यदा हर ।
तदा क्व ते महादेव पापं ब्रह्मवधादिकम् ॥
अतीतब्रह्मणामस्थ्नां स्रक्कण्ठे तव भासते ।
तत्तदा क्व गता देव ब्रह्महत्या तवाऽनघ ॥
कृत्वाऽपि सुमहत्पापं त्वां यः स्मरति भावतः ।
आधार जगतामीश तस्य पापं विलीयते ॥
यथा तमो न तिष्ठेत सन्निधावंशुमालिनः ।
तथा न तव भक्तानामघं सान्निध्यमृच्छति ॥
यश्चिन्तयति पुण्यात्मा तव पादाम्बुजद्वयम् ।
ब्रह्महत्याकृतमपि पापं तस्य व्रजेत् क्षयम् ॥
तव नामानुरक्ता वाग् यस्य पुंसो जगत्पते ।
अप्यद्रिकूटतुलितं नैनस्तमनुधावति ॥ इत्यादि ।

यच्च प्रागितिहासपुराणाद्युक्त्या विष्णोः सदाशिवे परा भक्तिः तत्प्रसादादेव च तस्य सर्वोत्तमत्वमिति प्रतिपादितं तदत्रत्यतथाविधवाक्यजातैकवाक्यतामापन्नं सद् भैरवस्य परमशिवरूपत्वं ज्ञापयति । अत्र च,

त्वद्वाक् पीयूषपानेन तृप्तोऽस्मि बहुमानद ।
वरं वृणीष्व गोविन्द वरदोऽस्मि तवानघ ॥ इत्यादि

स्वसूक्तिश्रवणानन्तरम्—

एष एव वरः श्लाघ्यो यदहं देवताधिगम् ।
पश्यामि त्वां महादेव मनोरथपथातिगम् ॥

अनभ्रेयं सुधावृष्टिरनायासो महोत्सवः ।
अयत्नो निधिलाभो यद्वीक्षणं हर ते सताम् ॥

अवियोगोऽस्तु मे देव त्वदङ्घ्रियुगलेन वै ।
एष एव वरः शम्भो नान्यं कश्चिद्वरं वृणे ॥ इति ।

हरिप्रार्थनायाम्—

एवं भवतु तेऽनन्त यत्त्वयोक्तं महामते ।
सर्वेषामपि देवानां वरदस्त्वं भविष्यसि ॥ इति ।

श्रीभैरवः श्री नारायणाय तेन याचितामनन्यामनपायिनीं स्वभक्तिं फलवत्सहकारन्यायेनायाचितमपि सर्वोत्तमत्वं च तस्मै ददावित्युक्तम् ।

श्रीभैरवस्य परशिवशिवादन्यत्वे कथमुभयत्र हरिभक्तेरनन्यत्वं स्यात् कथं वा तत्सर्वोत्तमत्वस्यैकतरप्रसादलभ्यत्वावधारणमित्यलं बहुना । एवं पाद्मादिष्वपि पुराणेषु द्रष्टव्यम् ।

एवञ्च सर्वेश्वरः सर्वान्तारात्मा सर्वशास्त्रतात्पर्यभूमिः मूर्तित्रयपरः श्री कालभैरव एवेति भैरवोपासकाः ।

श्री मल्लारिमुपासीनास्तु—

कौर्मे ब्रह्मनारायणयोः स्वस्वसर्वेश्वरत्वाभिमानेन विवादे प्रवृत्ते वेदैः प्रणवेन च सदाशिव एव सर्वेश्वरः सर्वान्तरात्मा सर्ववेदाम्नातपद इति पृथग् बोधितोऽपि विधिर्नावबुद्धवांश्चेत्तदा नीललोहितो रुद्रः प्रादुर्बभूव, स च तस्य गर्ववचनं श्रुत्वा "प्राहिणोत्पुरुषं कालं भैरवं लोकदाहकम्" इति कथितम् । तत्प्रेरितभैरवेण तच्छिरसि छिन्ने सति अथाप्यपश्यद्गिरिशं मण्डलान्तरसंस्थितम् ।

... तमासीनं महादेव्या महादेवं सनातनम् ॥ इति परमशिवप्रादुर्भावोऽभिहितः। तदनन्तरं च साम्बशिवो ब्रह्मणा बहुधा स्तुतः सन् स्वपादयोः पतितं विधिं "प्रोवाचोत्थाप्य हस्ताभ्यां प्रीतोऽस्मि तव साम्प्रतम्।"

दत्त्वास्मै परमं योगमैश्वर्यमतुलं महत्।
प्रोवाचाग्रेस्थितं रुद्रं नीललोहितमीश्वरम् ॥

एष ब्रह्मास्य जगतस्त्वमस्य प्रथमः सुतः।
आत्मनो रक्षणीयस्ते गुरुर्ज्येष्ठः पिता तव ॥

अयं पुराणः पुरुषो न हन्तव्यस्त्वयाऽनघ।
स्वयोगैश्वर्यमाहात्म्यान्मामेव शरणं गतः ॥

अयं च यज्ञो भगवान् सगर्वो भवताऽनघ।
शान्तितव्यो विरिञ्चस्य धारणीयं शिरस्त्वया ॥

ब्रह्महत्यापनोदार्थं व्रतं लोके प्रदर्शयन्।

चरस्व भिक्षामित्यादिना विधिं समाधाय नीललोहिते व्रताचरणाज्ञां विधाय च,

स्थानं स्वाभाविकं दिव्यं ययौ तत्परमं पदम्।
ततः स भगवानीशः कपर्दी नीललोहितः ॥
ग्राहयामास वदनं ब्रह्मणः कालभैरवम्। इत्युक्तम्।

तस्मिंश्च ग्रन्थसन्दर्भे विचार्यमाणः सदाशिवांशभूत नीललोहितांशः कालभैरव इति प्रतिभाति। काशीखण्डेऽपि कौर्मोक्तरीत्यैव प्राक्तनं सर्ववृत्तान्तमुपपाद्य,

अथेश्वरः पद्मयोनेः श्रुत्वा गर्ववतीं गिरम्।
सकोपनः समुत्पाद्य पुरुषं भैरवाकृतिम् ॥

प्राह पङ्कजजन्मासौ शास्यस्ते कालभैरव।
कालवद् राजसे साक्षात्कालराजस्ततो भवान् ॥

विश्वं भर्तुं समर्थोऽसि भरणाद् भैरवः स्मृतः।
त्वत्तो भेष्यति कालोऽपि ततस्त्वं कालभैरवः ॥

आमर्दयिष्यति भवान् रुष्टो दुष्टात्मनो यतः।
आमर्दक इति ख्यातिं ततः सर्वत्र यास्यति ॥

यतः पापानि भक्तानां भक्षयिष्यसि तत्क्षणात्।
पापभक्षण इत्येव तव नाम भविष्यति ॥ इत्यादिना श्री नीललोहितात्कालभैरवोदयस्य विविधवरलाभस्य चाभिधानात्तस्य तदंशत्वमवगम्यते।

महादेवांशसंभूतं भैरवं भैरवाकृतिम्। इत्यपि तत्रैवोक्तम्। अत्र महादेवः परमशिवस्तदंशो नीललोहितस्ततः संभूतस्य भैरवस्य परमशिवांशांशत्वं स्पष्टं प्रतीयते। एवं पद्मादिष्वपि द्रष्टव्यम्। तथा चांशांशिनोरभेदोपगमात् परमशिवांशनीललोहितांशत्वाद् भैरवस्य परमशिवाद् भेदाभावात्तत्त्वेन स्तुतिर्न विरुध्यते।

साक्षात् परमशिवस्तु श्रीमल्लारिरेव मोक्षकामैर्महापुरुषैः सदा ध्येयः।

तदुक्तम्—

ध्यायेन्मल्लारिदेवं कनकगिरिनिभं भूषिताङ्कं-
श्वेताश्वं खड्गहस्तं विविधबुधजनैः सेव्यमानं कृतार्थैः।
युक्ताङ्घ्रिं दैत्यमूर्ध्नि डमरुविलसितं नैशचूर्णाभिरामं-
नित्यं भक्तेषु तुष्टं श्वगणपरिवृतं नित्यमोङ्कारगम्यम्॥ इति।

अत्रान्त्येन नित्यपदेन प्रागभावाप्रतियोगित्वविशिष्टध्वंसाप्रतियोगित्वार्थकेन न तस्य कुतश्चिदुत्पत्तिर्नवा कुत्रचिल्लय इति प्रतिपादनात्सर्वकारणत्वं सूचितम्। पूर्वं नित्यपदं ध्यायेदित्यनेन योजनीयम्। तथा चोङ्कारगम्यो ब्रह्मविष्णुशिवात्मकः स एव परमात्मा परमशिवोऽन्यत्सर्वं परित्यज्य सदा ध्येयः। "शिव एको ध्येयः शिवङ्करः अन्यत्सर्वं परित्यज" इति श्रुतेः। ध्यायेन्नित्यं महेशमिति स्मृतेश्च। अयमेव परमशिवस्य लीलाविग्रहो गुरूपदेशमात्रगम्यः।

शैवैर्गोपनीयतयोक्तः श्रीमल्लारिरेव शम्भुनारायणयोः स्वस्वविभूतित्वेन ग्रहणात् मैलार इत्युच्यते।

मः शम्भुरुच विष्णुश्च ताविलायां यदाऽऽगतौ।
तदा मैलापदं जातं तावारातीति विग्रहात्॥

मैलार इति मल्लारेर्नामध्येयमभूत्किल। इति निर्वचनात्, रलयोर्व्यत्ययेनोच्चारणात्स एव मेराल इत्यपि व्यवह्रियते। हरिहरयोः स्वविभूतित्वेन ग्रहणे च विधेः सुतरां तद्विभूतित्वं सिद्धम्।

विस्मृतञ्चैतन्माहात्म्यं ब्रह्माण्डपुराणे। तस्मान्मूर्तित्रयपरो वेदान्ततात्पर्यगोचरः सर्वेश्वरः परमशिवः श्रीमल्लारिरेवेत्याहुः।

श्रीस्वामिकार्तिकेयभक्तास्तु—

सर्वप्राणिबुद्धिरूपा गुहा विद्यते आधारत्वेनास्येतिव्युत्पन्नार्शआद्यजन्तगुहपदाभिधेयः सर्वभूतगुहाशयः सर्वान्तरात्मा सज्जनभजनीयानन्तकल्याणगुणो ब्रह्मादिरूपेण जगदुदयादिकारकः ब्रह्मादिविभूतिमान् मूर्तित्रयपरः परमशिवः परमेश्वरः श्रीस्कन्द एव। स एव च निर्विशेषरूपेण "आत्मा वा अरे द्रष्टव्यः श्रोतव्य इति दर्शनमुद्दिश्य विहितश्रवणविषयतया तज्जन्यसर्वविलासाबोधवादकबोधविषयः। सर्वमेतदुक्तं शङ्करसंहितायां युद्धकाण्डे चतुर्विंशाध्याये देवविपक्षदानववधायोद्युक्तं तमुद्दिश्य देवैः—

त्यादिवचनकोटिभ्यश्च श्रीकृष्ण एव महाविष्णुवासुदेवादिपदाभिधेयो मूर्तित्रयपरः। अन्ये गुणावतारा इत्याहुः।

जयदेवाधिदेवेश भक्तवत्सल विश्वप।
रक्ष सर्वान् सुरानेतान् भवद्भक्तिपरायणान्॥
समाययावयं स्वामी भक्तानां रक्षणोद्यमः।
लीलया क्रीडते कालाल्लोकवन्द्यो गुहाशयः॥
गुहः परमकल्याणगुणोऽमितपराक्रमः।
सर्ववित्सर्वनेता च सर्वदेवाभिवन्दितः॥
सर्वाराध्यो जगत्सृष्टिस्थितिसंहारकारकः।
सर्वेषां प्राणिनां श्राव्यः सर्वश्रोत्रसुखावहः॥ इति।

किञ्च गणेशभैरवादिषु श्रुतार्थानुपपत्त्यादिना यथा कथञ्चित्परमशिवरूपत्वमीयते। तच्च तेषां तदंशत्वेनं ततोभेदाभावादप्युपपद्यते। श्रीस्कन्दस्य तु साक्षात् परमशिवरूपत्वं तत्रैवोत्तरग्रन्थेऽभिहितम्।—

कदा शूरवधो भावी कदा वा देवमोचनम्।
कदाऽस्मद्दुःखनाशो वा पदप्राप्तिः कदा च नः॥
न लभ्यते किमस्माभिरेतत्सर्वं हि जीविभिः।
इति तेषां वचः श्रुत्वा विष्णुराह सुरानिमान्॥
साक्षात्परशिवोऽस्माकं कर्ता नेता च शङ्करः।
षण्मुखाख्यां स्वयंकृत्वा देवान् रक्षितुमागतः॥
लीलया योऽखिलान् लोकानसङ्गः सह देहिभिः।
अप्यदर्शयदात्मीयदेहरोमसु षण्मुखः॥
पञ्चकृत्यकृतस्तस्य संहर्तूरखिलद्विषाम्।
अमीषां हनने भारः को वा स्याद्दितिजन्मनाम्॥
क्षणमात्रेण तानेतान् संहरिष्यत्ययं ग्रहः।
युष्माभिरमरैः सर्वैं विस्मृतो महिमाऽस्य वै॥
शिशुबुद्धिं विशेषेण करोषि त्वं पुरन्दर।
सर्वाण्डाधिपतौ तस्मिन् गुहे परमपावने॥ इति।

अत्र साक्षात् परशिवपदप्रयोगेण विष्ण्वादेः कर्तृत्वेन नेतृत्वेन च उत्पत्त्यादिपञ्चकृत्यकर्तृत्वेन सकललोकाधारत्वाधिपतित्वादिना च श्रीसुब्रह्मण्यस्य परमशिवरूपत्वमतिस्पष्टतया प्रतिपाद्यते।

यच्च परमशिवमाहात्म्यवचनेषु तद्बोधस्य दुर्लभत्वं विष्णोरेव तत्तत्त्वज्ञत्वं च दर्शितं तदत्रापीन्द्रादीनां तन्माहात्म्यविस्मरणाद्युक्त्या विष्णोस्तत्तत्त्वज्ञतासूचनेन चात्रत्य-

वाक्यैकवाक्यतामापन्नं सत् श्रीकुमारस्य परमशिवरूपत्वं ज्ञापयति। या चात्राखिल-लोकाधारता गुहस्य संक्षेपेणोक्ता सा तत्रैव पञ्चत्रिंशाध्याये विस्तृता—

तमेतं न सुरं वीक्ष्य देवः परमवैभवः।
एतानि तव रूपाणि दृष्टवानस्मि दानव॥
मदीयमपि रूपं त्वं पश्येत्युक्त्वा महेश्वरः।
जग्राह विश्वरूपं स्वमवाङ्मनसगोचरम्॥
महान्तः पर्वताः पादतलमध्ये व्यवस्थिताः।
विन्ध्यादयः स्थिता इन्द्रजयन्तौ ऊरुसंस्थितौ॥
कटिसन्धौ कालयमौ वसवः कटिदेशगाः।
पार्श्वभागे स्थिता देवा नानागुह्यादिदेशगाः॥
शेफस्थममृतं नाभावुत्पत्तिर्जगतां प्रभोः।
दिव्ये वक्षसि शास्त्राणि यज्ञोपवीतकम्॥
अण्डानि रोमकूपेषु पाणौ भोगस्य संस्थितिः।
ब्रह्मा विष्णुश्च भुजयोरङ्गुलीष्वमरस्त्रियः॥
शब्दजालमशेषं तत् कर्णदेशे समाश्रितम्।
आस्यमध्ये स्थिता वेदा देवदेवस्य भूसुराः॥
अक्षराणि च दन्तेषु जिह्वायां च शिवागमाः।
सप्तकोटिमहामन्त्रा ओष्ठदेशे व्यवस्थिताः॥
वायुर्नासिकसंस्थोऽस्य नेत्रयोरिन्दुभास्करौ।
दिशः श्रोत्रप्रदेशस्था ललाटे प्रणवः स्थितः॥
परमात्मा शिवः साक्षात् स्वयं शिरसि राजते।
एवमत्यद्भुतं रूपं दर्शयामास षण्मुखः॥ इति।

एवं संभवकाण्डादिष्वपि तन्माहात्म्यं बहु विस्तृतम्। यद्यपि सन्त्यन्येऽपि लीलाविग्रहाः परमशिवस्य सुध्युपास्या तथाऽप्ययं विग्रहोऽद्भुतः। यत्कान्त्या मृत्पाषाणमयोऽपि मेरुः सुवर्णमयो जात इति प्रसिद्धं भारतादिषु। ब्रह्मविष्णुशिवादीनामनन्तब्रह्माण्डानाञ्चाधारत्वेनास्यात्यन्ताद्भुतत्वसर्वकार्यमूलकारणत्वादिकं अत्रैव प्रदर्शितम्। इदमेव च परमेश्वरस्य लक्ष्यतावच्छेदकसमनियतधर्मरूपं, लक्षणं "जन्माद्यस्य यतः" इत्यादिन्यायसिद्धम्। "यतो वा" इत्यादि श्रुतिसिद्धञ्च। प्रमाणन्तु दर्शितमेव। तस्मात् "लक्षणप्रमाणाभ्यां हि वस्तुसिद्धिः" इति न्यायेन श्रीसुब्रह्मण्ये एव लक्षणसमनियतं परमेश्वरत्वं सिध्यतीति वदन्ति।

एवं ह्येकस्यैव सदाशिवस्य लीलाविग्रहेष्वेकाखण्डानन्तज्ञानानन्दघनस्वरूपेष्वप्यघटनघटनापटीयस्या तन्माययाऽन्यदेहवद्भिन्नपरिच्छिन्नसच्छिद्रत्वादिना प्रतीयमानेषु कथञ्चिदुत्कर्षापकर्षकल्पकानां शैवम्मन्यानां कोलाहलः प्रदर्शितः।

तादृशेष्वेव वैष्णवावतारेषु उत्कर्षापकर्षकल्पकानां वैष्णवम्मन्यानामपि कलहस्तथैव दृश्यते।

केचिद्धि पूर्वोदाहृततापनीयानुसारेण श्रीनृसिंह एव मूर्तित्रयपरो वासुदेवाभिधो महाविष्णुः साक्षात् परं ब्रह्ममूर्तिः। इतरे तु मूर्तित्रयान्तर्गतविष्णोरंशावतारा इति मन्यन्ते, इतरेतु—

ब्रह्मा ढिष्णुश्च रुद्रश्च देवेन्द्रो देवतास्तथा।
आदित्यादिग्रहाश्चैव त्वमेव रघुनन्दन॥
सदा त्वमक्षरं ज्योतिस्त्यमेव पुरुषोत्तमः।
त्वमेव तारकं ब्रह्म त्वत्तोऽन्यन्नैव किञ्चन॥

इत्यादि वचनान्याश्रित्य श्रीराम एव ब्रह्मादिविभूतिमान् तुरीयो वासुदेवः। अन्ये विष्णोरंशावतारा इति वदन्ति।

श्रीकृष्णोपासकास्तु—

प्रकटैश्वर्यवत्त्वात् साक्षाद् वासुदेवादिशब्दाभिधेयत्वात् शङ्खचक्रादिधरत्वात्,

अन्ये चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम्।
मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय॥

इत्यादि वचनकोटिभ्यश्च श्रीकृष्ण एव महाविष्णुवासुदेवादिपदाभिधेयो मूर्तित्रयपरः। अन्ये गुणावतारा इत्याहुः।

एवं वामनाद्युपासका अपि तत्तन्माहात्म्यवचनाश्रयेण तत्तदुत्कर्षम्मन्यमाना विवदन्ते।

किं बहुना एकस्मिन्नपि श्रीकृष्णे गोकुलस्थोऽन्यो द्वारकास्थोऽन्य इति भेदमध्यारोपयन्ति तत्र पूर्वः पूर्णावतारो द्वितीयोंऽशावतार इति केचित्।

अन्येतु—

जरासन्धभयादिव पलायित कृष्णः परशुरामेण समागतस्ततो मन्त्रं पृष्टवान्। स च तस्मै मन्त्रमुपदिश्य उक्तवान्—

तत्र ते कृष्ण संग्रामे सुव्यक्तं वैष्णवं वपुः।
द्रक्ष्यन्ति रिपवः सर्वे सुराश्च सुरभावन॥
तां भजस्व गदां कृष्ण चक्रं च चिरविस्मृतम्।

इति। अनेनेतः पूर्वं विष्णोरंश एवासीत्पृथिव्यामनन्तरं साक्षात्स्वयमागत इति गम्यते।

अयमर्थश्चाग्रे गरुडाख्याने—

सुप्तस्य शयने दिव्ये क्षीरोदे वरुणालये।
विष्णोः किरीटं दैत्येन हृतं वैरोचनेन वै॥
मोक्षयित्वा किरीटन्तु वैष्णवं यततां वरः।
व्यत्यक्रमत वेगेन गगनं देवतालयम्॥
स ददर्श गुरुं शैले विष्णुं कार्यान्तरं गतम्॥

इत्यादिना स्पष्टीकृतः। तथा च पूर्वोऽशो द्वितीयः पूर्ण इत्यसन्दिग्धमित्याहुः।

अग्निसेवकास्तु—

अग्निरेव परमेश्वरः परं ब्रह्म "यतो वा" इत्यादि ब्रह्मलक्षणस्य मार्कण्डेयपुराणे तत्र स्मरणात्—

अतः सर्वस्य योनिस्त्वं वह्ने सर्वमयस्तथा।
देवता दानवा यक्षा दैत्यगन्धर्वराक्षसाः॥
मानवाः पशवो वृक्षा मृगपक्षिसरीसृपाः।
आप्यायन्ते त्वया सर्वे सम्वध्यन्ते च पावक॥
त्वत्त एवोद्भवं यान्ति त्वय्यन्ते न तथा लयम्।
अपः सृजसि देव त्वं त्वमत्सि पुनरेव ताः॥
त्वया सृष्टमिदं विश्वं वदन्ति परमर्षयः।
त्वदृते हि जगत्सर्वं सद्यो न स्याद् हुताशन॥ इत्यादि।

सर्वोपादानत्वप्रयुक्तं सर्वात्मकत्वमपि तत्रैव तस्य—"त्वमेव मेघस्त्वं वायुस्त्वं वीजं सस्यहेतुकम्" इत्यादिनोक्तम्।

न च श्रुतीतिहास पुराणादिषु—
त्वं ब्रह्मा जननपरस्तथैव विष्णु—
र्भूतेशः सुरपतिरर्यमा जलेशः।

इत्यादिना ब्रह्मादीनां सर्गादिहेतुत्वोक्तेः कथं वह्नेः सर्वहेतुत्वमितिवाच्यम्, वह्नेः सर्वहेत्वनतिरेकात्। तथा सर्वयज्ञाराध्यत्वं सर्वकर्मफलदातृत्वं सर्वशास्त्र-प्रतिपाद्यत्वं च "शास्त्रयोनित्वात्" "तत्तु समन्वयात्" "फलमत उपपद्यते" इत्यादिन्यायसिद्धम्। "सर्वे वेदा यत्पदमामनन्ति" "एष ह्येव साधु कर्म कारयति" इत्यादि श्रुतिसिद्धञ्च।

परमेश्वरलक्षणजातमपि तत्र स्मर्यते—

त्वं विप्रैः सततमिहेज्यसे फलार्थं-
वेदाङ्गेष्वपि सकलेषु गीयसे च।
त्वमक्षयः कोऽप्यविचिन्त्यरुपः॥ इत्यादि।

एवमन्यत्राप्यग्निपुराणादिषु बोध्यम्।

"अग्निरग्रे प्रथमो देवतानाम्" इति श्रुतिरपि तस्मिन् सर्वदेवादिजगत्पूर्ववृत्तित्वलक्षणं तत्कारणत्वं ब्रह्मलिङ्गं बोधयति। तस्मात् सर्वजगत्कारणं सर्वात्मा सर्ववेदवेद्यः मूर्तित्रयपरः परमशिवमहाविष्णुशब्दाभिधेयः परमेश्वरः श्रीमदग्निदेव एवेति संभावयन्ति।

"वेदानां सामवेदोऽस्मि" इति स्मृतेः सामवेदस्येतरवेदेभ्य—उत्कर्षोऽवगम्यते। "बृहत्साम तथा साम्नाम्" इति स्मृतेश्च साम्नामपि बृहत्साम्नः श्रेष्ठत्वमवबुध्यते। तस्मिश्चेन्द्रस्य सर्वेश्वरत्वं प्रतिपाद्यते। तथा चेतरसर्वेश्वरत्वप्रतिपादकान्यपि वाक्यानि सुखरपरतया नेयानि। न तु बृहत्साम्न—इतरपरत्वं व्याख्यातुमुचितम्। "गुणे त्वन्याय्य कल्पना" इति न्यायात्।

इति परमैश्वर्ये इति स्मृतिरपीन्द्रस्य परमेश्वरत्वे मानम् किञ्च—

आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमान्।
मरीचिर्मरुतामस्मि नक्षत्राणामहं शशी॥
रुद्राणां शङ्करश्चास्मि वित्तेशो यक्षरक्षसाम्।
वसूनां पावकश्चास्मि।

इति विष्ण्वादीनां तत्तद्देव विशेषापेक्षया श्रेष्ठत्वमभिधाय "देवानामस्मि वासवः" इति देवसामान्यापेक्षया श्रेष्ठत्वं श्रीशक्रस्याभिहितम्। "तस्मात्स सर्वोत्तमः विश्वस्मादिन्द्र उत्तरः" इति श्रुतिरपीन्द्रस्य सर्वोत्तमत्वं बोधयति।

अपि चास्ति कौशीतकी ब्राह्मणोपनिषदि इन्द्रप्रतर्दनाख्यायिका—

"प्रतर्दनो हि दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम, युद्धेन च पौरुषेण च तं दृष्ट्वा इन्द्र उवाच-प्रतर्दन, वरं ते ददामि, स होवाच-प्रतर्दनः, हे इन्द्र त्वमेव वरं वृणीष्व यं त्वं मनुष्याय हिततमं मन्यसे इति हिततमरूपे वरे प्रतर्दनेन प्रार्थिते इन्द्ररूवचनं मामेव विजानीहि एतदेवाहं मनुष्याय हिततमं मन्ये यन्मां विजानीयादिति।"

अत्र हिततमत्वेनेन्द्रविज्ञानमेवावगम्यते। न च मोक्षरूपं हिततमं नेन्द्रविज्ञानसाध्यमिति शङ्क्यम्, मां विजयानीयादितिवाक्ये स्वमुपक्षिप्य मामेवेत्यवधारणेनान्यस्य निषेधेनेन्द्रादन्यत्र वाक्यस्य नेतुमशक्यत्वात्। उत्तरत्र चेन्द्रेण स्वस्य सर्वपापास्पृष्टत्वं "त्रिशीर्षाणं त्वाष्ट्रमहनम् अरुन्मुखान्यतीन् शालावृकेभ्यः प्रायच्छम्" इत्यादिना निरूप्य तत्क्रतुन्यायावलम्बनेन "स यो मां विजानीयान्न हवै तस्य केन च न कर्मणा लोको मीयते न स्तेयेन न भ्रूणहत्यया इत्यादिनोपासकस्यापि सर्वपापास्पृष्टत्वस्योपपादिततयोपक्रान्तहिततमत्वमपि सर्वपापराहित्यमेवागम्यते। मोक्षस्तु लक्षणया निर्विशेषतत्स्वरूपविज्ञानेनैव।

छन्दोगब्राह्मणेऽपि श्रूयते—

इन्द्रो यतीन् शालावृकेभ्यः प्रायच्छत तेषां त्रय उदशिष्यन्त पृथुरश्मिर्बृहद्गिरिरापोवाजस्तेऽब्रुवन् को न इमान् पुत्रान् भरिष्यतीति अहमितीन्द्रोऽब्रवीदिति। अत्र हि को न इमान् पुत्रान् अहमिन्द्रोऽब्रवीदिति अत्र हि को इमान् पुत्रान् भरिष्यतीति वाक्यशेष पर्यालोचनयाऽयमर्थोऽवगम्यते—पुत्राद्यासक्तेषु बहुषु यतिषु इन्द्रेण शालावृकेभ्यो दत्तेषु अवशिष्टास्त्रयोऽस्माभिरपि पुत्राद्यासक्तिः संपादिता चेदस्मानपि शालावृकेभ्य इन्द्रो दास्यति, पुत्राद्यासक्त्यसंपादने तेषां जीवनं कथं स्यादिति व्यग्रचित्ता इन्द्रमपृच्छन् को न इमान् पुत्रान् भरिष्यतीति। पुत्रभरणग्रहणञ्च वेदान्तनिष्ठाविरुद्धलौकिकव्यापारमात्रोपलक्षकंनिषिद्धत्वाविशेषात्। अत एव एतद्वाक्यैकार्थ्ययान्मुखा इत्यत्रापि ब्रह्मनिष्ठताराहित्यमेव विवक्षितम्।

तदक्षरार्थस्तु—रौति यथार्थं वक्तीति रुत् वेदान्तवाक्यं तन्मुखे येषां ते रुन्मुखाः स्वाश्रमोचितवेदान्तार्थश्रवणमनननिदिध्यासननिरतास्तद्भिन्नाअरुन्मुखा इति। एतेन "फलमत उपपद्यते" इति न्यायसिद्धं शुभाशुभकर्मफलदातृत्वं परमेश्वरलक्षणमिन्द्रे ध्वन्यते। अत इन्द्रः परमेश्वर इति वृष्ट्याद्यर्थमिन्द्रमुपासीनाः।

नेन्द्र ईश्वरः तदीश्वरत्वे मानाभावात्। यत्तु वेदानां सामवेदोऽस्मीत्याद्युपक्रमेणेन्द्रस्येश्वरत्वं प्रतिपादितं तदयुक्तम्—न ह्येकस्य बृहत्साम्नोऽनुसारेण श्रुतीतिहासपुराणादिवाक्यानां सर्वेषामन्यथानयनमुचितं किन्त्वेकस्य तस्येन्द्रस्थतदन्तार्यामिपरत्वम्। बहूनामनुग्रहो न्याय्य इति न्यायात्।

"देवानामस्मि वासवः" इत्यनेन तु शक्रस्येश्वरत्वं शक्रेणापि प्रतिपादयितुमशक्यम्, शक्रे विष्णुविभूतित्वस्य स्पष्टतया प्रतीतेः। "विश्वस्मादिन्द्र उत्तरः" इत्यत्रापि वाक्यान्तरविरोधाद्विश्वशब्दः "सर्वे ब्राह्मणा निमन्त्रिताः" इत्यत्रत्य सर्वं शब्द इव संकुचितवृत्तिरेवोपेयः।

इन्द्रस्य प्रतर्दनं प्रति मामेव विजानीहीत्याद्युपदेशस्तु शास्त्रदृष्ट्या ज्ञातव्यः। इन्द्रो हि शताश्वमेधकरणेनेन्द्रभावं प्राप्तत्वाज्जीवत्वेन प्रसिद्धोऽपि कृतब्रह्माभेदसाक्षात्कार आत्मानमेवोपदिशति। यथा तत्त्वसाक्षात्कारवान् वामदेवोऽस्मच्छब्दोक्ते सर्वात्मत्वं व्यवहृतवान् "अहं मनुरभवं सूर्यश्चेति"। तथा व्याससूत्रम्—

"शास्त्रदृष्ट्या तूपदेशो वामदेववत्" इति। अतो "मामेव विजानीहि" इति वाक्यगतस्य मामित्येतस्य विशुद्धप्रत्यङ्मात्रपर्यवसितत्वादेवकारोऽपि प्रत्यगात्मविषयबोधादन्यगोचरं ज्ञानं वारयति। तथा च प्रश्नप्रतिवचनाभ्यां प्रतिपिपादयिषितस्य हिततमत्वस्य न पापाभावमात्रतया व्याख्यानमुचितम्, उत्तरत्रेन्द्रस्य पापासंश्लेषप्रतिपादनन्तु हिततमशब्दोदितमुक्तिहेतुर्निर्विशेषब्रह्मबोधस्तुत्यर्थम्। तस्मान्नेदमपि वाक्यं शक्रपरमिति न स परमेश्वरः किन्तु वेदमातृरूपसावित्रीप्रतिपाद्यतया सकलत्रै-

वर्णिकाराध्यः श्री सवितैव। स एव शैवैः परमशिव इति, वैष्णवैर्वासुदेव इति महाविष्णुरिति चोच्यते। स चापहतपाप्मत्वादीश्वरलक्षणलक्षितः। अतस्तदुपासनयापि तत्क्रतुन्यायेन निखिलकल्मषनिवृत्तिः।

तथा च श्रुतिः—

"अथ च एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणाशात्सर्व एव सुवर्णस्तस्य यथाकप्यासं पुण्डरीकमेवाक्षिणी तस्योदिति नाम स एष सर्वेभ्य उदितः उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद" इति।

अत्रादित्यपदं मण्डलपरमिति नादित्योपास्ययोर्भेदः शङ्कनीयः किञ्च सर्वजगत्कारणत्वं सर्वात्मत्वं सर्वकर्मफलदातृत्वं सर्वोत्तमत्वं शास्त्रयोनित्वं मुक्तपाप्मत्वं च परमेश्वरलक्षणमितिहासपुराणादिषु श्रीसवितरि स्मर्यते।

तत्र तावद् वनपर्वणि—

त्वं भानो जगतश्चक्षुस्त्वमात्मा सर्वदेहिनाम्।
त्वं योनिः सर्वभूतानां त्वमाचारः क्रियावताम्॥

त्वं गतिः सर्वसाङ्ख्यानां योगिनां त्वं परायणम्।
त्रयस्त्रिंशच्च वै देवास्तथा वैमानिका गणाः॥

सोपेन्द्राः समहेन्द्राश्च त्वामिष्ट्वा सिद्धिमागताः।
सब्रह्मकेषु लोकेषु सप्तस्वप्यखिलेषु च॥
न तद्भूतमहं मन्ये यदर्कादतिरिच्यते। इत्यादि।

मार्कण्डेये चादित्यं प्रति विधिवाक्यम्—

नमामि यन्मयं सर्वमेतत्सर्वमयश्च यः।
विश्वमूर्तिः परं ज्योति यत्तद्ध्यायन्ति योगिनः॥

य ऋङ्मयो यो यजुषां निधानं-
साम्नां च यो योनिरचिन्त्यरूपः।
त्रयीमयः स्थूलतयाऽर्धमात्रः-
परस्वरूपोऽणुतया च योग्यः॥
तं सर्वहेतुं परमं च वेद्य-
माद्यं परं ज्योतिरवाच्यरूपम्।
स्थूलञ्च वेदात्मतया नमस्ये-
भास्वन्तमाद्यं परमं परेभ्यः॥
सृष्टिं करोमि यदहं तव शक्तिराद्या॥ इत्यादि।

लैङ्गे च—

सूर्य एव त्रिलोकस्य मूलं परम दैवतम् ।
ततः संजायते सर्वं तत्र चैव प्रलीयते ॥ इत्यादि ।

कौर्मे च—

ओं खद्योताय शान्ताय कारणत्रयहेतवे ।
नमस्ते घृणिने तुभ्यं सूर्याय ब्रह्मरूपिणे ॥
त्वमेव ब्रह्म परममापो ज्योतीरसोऽमृतम् ।
भूर्भुवस्स्वस्त्वमोङ्कारः शर्वो रुद्रः सनातनः ॥
त्वमेव विश्वं बहुधा जातं यज्जायते च यत् ।
नमो रुद्राय सूर्याय त्वामहं शरणं गतः ॥ इति ।

भविष्योत्तरे च—

एष कर्ता हि लोकानां संहर्ता रक्षकस्तथा ।
एष धाता विधाता च वीजं क्षेत्रं प्रजापतिः ॥
एष एव प्रजा नित्यं संवर्द्धयति रश्मिभिः ।
एष यज्ञः स्वधा स्वाहा ह्री श्रीश्च पुरुषोत्तमः ॥
सर्वदेवात्मको देवः सूक्ष्मोव्यक्तः सनातनः ।
ईश्वरः सर्वभूतानां परमेष्ठी प्रजापतिः ॥ इति ।

तथा ब्रह्मादीनां तद्विभूतित्वोक्त्या तुरोयब्रह्मरूपत्वमपि तस्येतिहासादिषु ध्वन्यते ।

तत्र तावद् वाल्मीकीये युद्धकाण्डे—

एष ब्रह्मा च विष्णुश्च शिवः स्कन्दः प्रजापतिः ॥ इति ।

भविष्योत्तरे च—

एष विष्णुः शिवश्चैव ब्रह्मा चैव प्रजापतिः ॥ इति ।

ब्राह्मेऽपि

विधिमुखादत्यन्तमादित्यमाहात्म्यं श्रुतवतामृषीणाम्,

य इच्छेन्मोक्षमास्थातुं देवतां कां यजेत सः । इत्यादि प्रश्नप्रपञ्चमुपन्यस्य—

यो धन्य एष कुरुते जगद्वितिमिरं करैः ।
नातः परतरो देवः कश्चिदन्यो द्विजोत्तमाः ॥

इत्यादिनातिविस्तरेण प्रोक्तं सर्वं श्रीसूर्ये संप्रतिपादितम् । भविष्ये तु ब्रह्मादेरप्युत्पत्तिरैश्वर्यप्राप्तिश्च रवेरभिहिता । यथाह ब्रह्मा हरिं प्रति—

आराध्य तं महादेवो महच्छुभमवाप्तवान् ।
अहञ्चापि समस्तानां लोकानां सृष्टिकारकः ॥

त्वमप्येष हृषीकेश तत्प्रसादान्न संशयः।
समर्थो देवशत्रूणां दैत्यानां नाशने सदा॥
दक्षिणं किरणं तस्य यद् देवस्य विवस्वतः।
अहं तस्मात्समुत्पन्नो वेदवेदाङ्गसम्मितः॥
वामं यत् किरणं कृष्ण रश्मिमालाकुलं सदा।
तस्मादीशः समुत्पन्नः पार्वतीदयितः शिवः॥
अक्षितस्त्वं समुत्पन्नः शङ्खचक्रगदाधरः॥ इत्यादि।

एवमन्येष्वपि पुराणेषु दृश्यते। तस्मात्तुरीयः परब्रह्ममूर्तिः परमेश्वरः श्री सूर्य एव। इतरेषान्तु सर्वेषां तद्विभूतित्वादित्यादित्यचिन्तकाः। एवं देवीष्वपि तत्तन्माहात्म्यवचनान्याश्रित्य केचित्सरस्वतीमेव सर्वोत्कृष्टां मन्यन्ते। अन्ये लक्ष्मीम्। परेतूमैव सर्वोत्तमेति प्रतिपादयन्ति।

केचित्तु मार्कण्डेयान्तर्गतसप्तशतिकाप्रतिपाद्या महालक्ष्मीः सर्वोत्तमा ब्रह्मादयः सरस्वत्यादयश्च सर्वे तद्विभुतयः। सैवजगदुत्पत्त्यादिहेतुः बन्धमोक्षादिहेतुश्च।

सैषा प्रसन्ना वरदा नृणां भवति मुक्तये।
संसारबन्धहेतुश्च सैव सर्वेश्वरेश्वरी॥
सृष्टिस्थितिविनाशानां शक्तिभूते सनातनि।
विष्णुः शरीरग्रहणमहमीशान एव च॥
कारितास्ते यतोऽतस्त्वां कः स्तोतुं शक्तिमान् भवेत्।
मेधासि देवि विदिताखिलशास्त्रासारा,
दुर्गासि दुर्गभवसागरनौरसङ्गा।
श्रीः कैटभारिहृदयैककृताधिवासा,
गौरी त्वमेव शशिमौलिकृतप्रतिष्ठा॥
यस्याः प्रभावमतुलं भगवाननन्तो-
ब्रह्मा हरश्च नहि वक्तुमलं बलञ्च।
सा चण्डिकाऽखिलजगत्परिपालनाय-
नाशाय चाशुभभयस्य मतिं करोतु॥
हेतुः समस्तजगतां त्रिगुणापि दोषै-
र्नं ज्ञायसे हरिहरादिभिरप्यपारा।
सर्वाश्रयाऽखिलमिदं जगदंशभूत-
मव्याकृता हि परमा प्रकृतिस्त्वमाद्या॥

इत्यादिमार्कण्डेयपुराणवचनेभ्यः तत्रैव "हंसयुक्तविमानस्थ" इत्यादिना वृत्रप्राणहरे चैन्द्रीत्यन्तेन सपितृमातृणामपि तद्विभूतित्वं दर्शितम्। अस्याश्च लक्ष्म्या लक्ष्यभेदेन द्विविधं स्वरूपं प्राधानिकरहस्याख्ये ग्रन्थेऽभिहितम् तत्र तावत् नृपप्रश्नः—

भगवन्नवतारा मे चण्डिकायास्त्वयोदिताः।
एषाञ्च प्रकृतिं ब्रह्मन् प्रधानं वक्तुमर्हसि॥ इति।

तत्रोत्तरम्—

सर्वस्याद्या महालक्ष्मीस्त्रिगुणा परमेश्वरी।
लक्ष्यालक्ष्यस्वरूपा सा व्याप्य कृत्स्नं व्यवस्थिता॥
मातुलिङ्गं गदां खेटं पानपात्रं च बिभ्रती।
नागं लिङ्गं च योनिञ्च बिभ्रती नृपमूर्धनि॥

तप्तकाञ्चनवर्णाभा तप्तकाञ्चनभूषणा। इति लक्ष्यस्वरूपम्।

शून्यं तदाखिलं स्वेन पूरयामास तेजसा। इत्यलक्ष्यरूपञ्चाभिहितम्। लिङ्गं योनिञ्च बिभ्रतीत्यनेनास्याः पुंरूपत्वं स्त्रीरूपत्वञ्च ध्वनितम्। यद्वा लिङ्गञ्च योनिञ्चेत्यस्य जलहारीसहितं सदाशिवमित्यर्थः। मूर्धनीति स्वरसात्।

बीजपूरं गदां चर्म सीधुपात्रं च बिभ्रती।
नागं लिङ्गं च योनिं च वेण्यां भवति सुन्दरि॥

इति रुद्रयामले वेण्यामित्युक्तिस्वरसाच्च। एतदेवरूपं शैवैः सदाशिवं इति कथ्यते। वैष्णवैर्वासुदेव इति महाविष्णुरिति च।

इयं महालक्ष्मीः कूटस्था सप्तशतिकाप्रथममध्यमोत्तमचरितत्रयदेवता समष्टिरूपा सकलदेवीमहात्म्यदेवतेति बोध्यम्।

एषा शैवी वैष्णवी च—

सदा शिवाङ्कमारूठा शक्तिरिच्छाह्वया शिवा।
महालक्ष्मीरिति ख्याता देवी सर्वगुणान्विता॥ इति।

शिवपुराणात्। लक्ष्मीतन्त्रे विष्णुशक्तिरूपया लक्ष्म्या शक्रं प्रति काल्यादीनां स्वावतारभेदत्वोक्तेश्च। एतच्च महालक्ष्म्याः सर्वात्मत्वे पर्यवस्यति।

किञ्च प्राधानिकरहस्ये मायाविशिष्टं शुद्धं ब्रह्मेदं प्रधानतत्त्वस्थमिति सामान्येन तत्स्वरूपमुक्त्वा गुणत्रयभेदेन महाकालाल्यादि रुपास्तदवतारा दर्शिताः। तेन च मार्कण्डेये ध्वनितं ब्रह्मादीनां सरस्वत्यादीनाञ्चैतद्विभूतित्वं स्पष्टीकृतम्। तद् यथा—

शून्यं तदखिलं लोकं विलोक्य परमेश्वरी।
बभार रुपमपरं तमसा केवलेन हि॥

अत्र केवलेनेत्युक्तिस्तमसः प्राधान्यमाश्रित्येति बोध्यम्।

सा भिन्नाञ्जनसंकाशा दंष्ट्राङ्कितवरानना।
विशाललोचना नारी बभूव तनुमध्यमा॥
खड्गपात्र-शिरःखेटैरलङ्कृत-चतुर्भुजा।
कबन्धहारमुरसा बिभ्राणा हि शिरःस्रजम्॥

सर्पमयीं स्रजमित्यर्थः ।

मूर्ध्नि सर्पसहस्राणां स्रजं वै सुन्दरी तदा । इति यामलोक्तेः ।

अस्या रुपेण तामसीत्वमुक्त्वा तदेव मोहजनकत्वोपपत्तये बोधाल्पत्वप्रदर्शनेन दृढीकृतम्—

सा प्रोवाच महालक्ष्मीं तामसी प्रमदोत्तमा ।
नाम कर्म च मे मातर्देहि तुभ्यं नमो नमः ॥ इति ।

ततो महालक्ष्मीवचनम्—

महामाया महाकाली महामारी क्षुधा तृषा ।
निद्रा तृष्णा चैकवीरा कालरात्रिर्दुरत्यया ॥
इमानि तव नामानि प्रतिपाद्यानि कर्मभिः ॥ इति ।

इमां रुद्रेत्यन्ये व्यवहरन्ति । तदनन्तरं—

तामित्युक्त्वा महालक्ष्मीः स्वरूपं परमं नृप ।
सत्त्वाख्येनातिशुद्धेन गुणेनेन्दुप्रभं दधौ ॥
चतुर्भुजा तु सा नारी श्वेतपर्वतसन्निभा ।
अक्षमालाम्बुजधरा वीणापुस्तकधारिणी ॥
सा बभूव वरा नारी नामान्यस्यै च सा ददौ ॥ इति ।

अस्याः सत्त्वप्रधानत्वं दर्शयितुं बोधकला तिरोभावाभावो नामादिप्रश्नेन सूचितः ।

महाविद्या महावाणी भारती वाक् सरस्वती ।
आर्या ब्राह्मी कामधेनुर्वेदगर्भा च धीश्वरी ॥ इति ।

इमां विष्णुरित्यन्ये कथयन्ति । श्वेतरुपधरत्वेनापि विष्णोः स्मरणात् । अत्र तमःसत्त्वयोर्विभागोक्त्या महालक्ष्मीरेव स्वयं रजःप्राधान्येन स्थितेत्युक्तं भवति । इमां ब्रह्मेत्यन्ये वदन्ति । अलक्ष्यरुपं च सर्वमूलं तुरीयं ज्ञेयं महालक्ष्मीः । पर रूपं च बभारेत्यादिनाऽऽसां मूलशक्त्यभेदसूचनात् । परस्परमपि तदभिन्ना भिन्नस्य तदभिन्नत्वमिति न्यायेनाभेदो बोध्यः । स्वस्वरुपांशेऽनावृत्तबोधत्वादासां तदभेदबोधोऽपि । एतास्तिस्रोऽपि कन्या एव । तत्समानकक्ष्यपुरुषान्तरानुक्तेः । सर्वासां स्त्रीपुरुषोभयरूपता च ।

अथोवाच महालक्ष्मीर्महाकालीं सरस्वतीम् ।
युवां जनयतां देव्यौ मिथुने स्वानुरूपतः ॥
इत्युक्त्वा ते महालक्ष्मीः ससर्ज मिथुनं स्वयम् ।
हिरण्यगर्भौ रुचिरौ स्त्रीपुंसौ कमलासनौ ॥
ब्रह्मन् विधे विरिञ्चेति धातरित्याह तं नरम् ।
श्रीः पद्मे कमले लक्ष्मीत्याह माता च तां स्त्रियम् ॥

इमौ रजःप्रधानौ ।

महाकाली भारती च मिथुने सृजतः सह ।
नीलकण्ठं रक्तबाहुं श्वेताङ्गं चन्द्रशेखरम् ॥
जनयामास पुरुषं महाकाली सितां स्त्रियम् ॥
स रुद्रः शङ्करः स्थाणुः कपर्दी च त्रिलोचनः ।
त्रयी विद्या कामधेनुः सा स्त्री भाषाऽक्षरा स्वरा ॥

इमौ सत्त्वप्रधानतमोयुतौ ।

सरस्वती स्त्रियं गौरीं कृष्णञ्च पुरुषं नृप ।
जनयामास नामानि तयोरपि वदामि ते ॥
विष्णुः कृष्णो हृषीकेशो वासुदेवो जनार्दनः ।
उमा गौरी सती चण्डी सुन्दरी सुभगा शिवा ॥
एवं युवतयः सद्यः पुरुषत्वं प्रपेदिरे ॥

पुरुषत्वं केवलपुरुषत्वमुभयरूपत्वस्य प्रागुक्तत्वात् । इमौ तमोऽधिकसत्त्वयुक्तौ । एताश्च न सर्ववेद्याः तत्क्रियाश्च न सर्ववेद्याः । चक्षुष्मन्तो न पश्यन्ति पश्यन्ति ज्ञानचक्षुष इत्युक्तेः । ततः—

ब्रह्मणे प्रददौ पत्नीं महालक्ष्मी नृपत्रयीम् ।
रुद्राय गौरीं वरदां वासुदेवाय च श्रियम् ॥ इति ।

तत्र स्वस्वपत्न्या सहितास्ते क्रमेण ब्रह्मा सृष्टिं, विष्णुः पालनं, रुद्रः संहारं कृतवान् इत्यग्रे उक्तम्—

स्वरया सह सम्भूय विरिञ्चोऽण्डमजीजत् ।
बिभेद भगवान् रुद्रः तद्गौर्या सह वीर्यवान् ॥

इत्यादि । यामले च—

अण्डमध्ये तु सकलं प्राणिजातमभूत्ततः ।
तत्सर्वं पालयामास लक्ष्म्या सह जनार्दनः ॥
संजहार जगत्सर्वं महागौर्या महेश्वरः ।
एवं चराचरं सर्वं महालक्ष्म्या अभूत्सुर ॥
अहं त्वं च समुत्पन्नो ब्रह्मा देवाश्च सर्वतः ॥ इति ।

एते च ब्रह्मादयो महाकल्पादौ अनेनैव क्रमेण महालक्ष्म्याः सकाशाज्जायन्ते । तदनन्तरं कदाचित् लक्ष्म्या कालीसरस्वत्यौ सरस्वत्या इतरे काल्या इतरे विष्णोर्ब्रह्मरुद्रौ ब्रह्मणो विष्णुरुद्रौ रुद्राद् ब्रह्मविष्णू इत्यपि स्वेच्छावशादिति नानाप्रकारेतिहासपुराणाद्युक्तसृष्टिक्रमे न कश्चिद् विरोधः । एवं हरेर्योगनिद्रासम्पादिकाया अपि काल्या मूलशक्त्यभेदादेव मार्कण्डेये "तया विसृज्यते सर्वं" "सा विद्या परमा मुक्तेः"

इत्यादिना कृता सर्वात्मतया स्तुतिर्न विरुद्धा। तथा जडात्मिकायाः प्रकृतेश्चेतनरूपायाश्चिच्छक्तेश्चाधिष्ठात्र्यधिष्ठेययोर्भेदाभावाद् "योगनिद्रा जगत्पतेः" "सैषा प्रसन्ना वरदा" इत्यादौ दर्शितं चिज्जडसामानाधिकरण्यमप्युपपद्यते।

सा चेयं शक्तिः शक्तिमताधिष्ठितैवोपास्या। तत्र शक्तस्य शक्तिं प्रत्यधिष्ठानत्वेऽपि कार्योत्पत्तौ शक्तेः प्राधान्यात् शक्तिरूपताऽस्येति व्यवहारो नानुपपन्नः। इयमेव परमशिवाधिष्ठितशक्तिरूपा महालक्ष्मीर्नाकृतपुण्यैरुपासितुं शक्या ब्रह्मादिभिरप्याराध्या च।

यदुक्तमभियुक्तैः—

शिवः शक्त्या युक्तो यदि भवति शक्तः प्रभवितुं-
न चेदेवं देवो न खलु कुशलः स्पन्दितुमपि।
अतस्त्वामाराध्यां हरिहरविरिञ्च्यादिभिरपि-
प्रणन्तुं स्तोतुं वा कथमकृतपुण्यः प्रभवति॥ इति।

किं बहूक्त्या महाकाल्यादिद्वारा ब्रह्मादिद्वारा च सर्वस्य मूलकारणभूता महालक्ष्मीरेवोपास्या सर्वफलप्रदा च। तस्माद् ब्रह्माधिष्ठितशक्तिरूपा शक्त्युपहितब्रह्मस्वरूपा वा महालक्ष्मीरेव सर्वोत्कृष्टा सर्वेश्वरीति सिद्धमिति वदन्ति।

एवं हि वादिनो "यद्विवाहस्तद्गीतगानम्" इति न्यायानुसारीणि स्वस्वेष्टदेवमाहात्म्यवाच्यानि पश्यन्त इतराणि च पश्यन्तोऽपि दुराग्रहपिनद्धदृष्टित्वादपश्यन्त इव तदेकवाच्यतादिकं चाजानन्तः "अन्धगज" न्यायेनान्योऽन्यं विवदन्ते। केचित्तु स्वस्वप्रीतिगोचरान् यक्षराक्षसभूतप्रेतपिशाचादीन् "नृपनापितपुत्र" न्यायेन अयमेव सर्वोत्कृष्टोऽयमेव सर्वोत्तम इति मन्यन्ते। तेभ्यश्च स्वयं तत्तत्स्वाभिलषितार्थतृष्णाग्रस्तेभ्योऽनाप्तकामेभ्योऽपि "स्वशिश्नमपि चुम्बन्तमिक्षुदण्डमयाचत" इति न्यायेन स्वाभिलषितार्थान् याचन्ते।

इतरे तु वटाश्वत्थचैत्यचूतवंशार्कादीनिस्वस्वकुलदैवतानि मत्वा तेभ्यः स्थावरयोनिप्राप्त्याऽतिदुःखितेभ्योऽपि "महिषीप्रसवोन्मुख्ये महिषो मदनातुरः" इति न्यायेन स्वाभिलषितविषयान् प्रार्थयन्ते "अन्धचटक" न्यायेन अकस्माल्लब्धमर्थं तद्दत्तं मन्यन्ते।

अघटनघटनापटीयस्या माययोपहितं जगतामभिन्ननिमित्तोपादानं परब्रह्म परमेश्वरः। तस्यांशैरिवांशैरीश्वरकोटिभिर्ब्रह्मादिभिर्जीवकोटिभिर्ब्रह्मेन्द्रादिभिश्चेदं जगद् व्याप्तमित्यौपनिषदाः। तथा च श्रुतिः—

मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्।
तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत्॥ इति।

एवञ्च जडपदार्थानामप्यधिष्ठानभूतब्रह्मानतिरेकात् तदीशवादिभिरपि न विरोधः। सर्वे चैते सेविताः सन्तः ईश्वरत्वात् फलप्रदा भवन्ति।

न च सर्वेषामीश्वरत्वे तत्तदाराधनफलवैषम्यं न स्यादितिवाच्यम्, पूज्यपूजादीनां सात्त्विकादिभेदेन फलवैषम्योपपत्तेः इयं हि सांसारिकफलव्यवस्था। मोक्षस्तु प्रत्यगभिन्नब्रह्मसाक्षात्कारादेव।

तदुक्तमभियुक्तैः—

ईशसूत्र विराड् वेधा विष्णुरुद्रेन्द्रवह्नयः।
विघ्नभैरवमैरालमारिका यक्षराक्षसाः॥
विप्र-क्षत्रिय-विट्-शूद्र-गवाश्व-मृग-पक्षिणः।
अश्वत्थ-वट-चूताद्या यव-व्रीहि-तृणादयः॥
जल-पाषाण-मृत्-काष्ठ-वास्य-कुद्दालकादयः।
ईश्वराः सर्व एवैते पूजिताः फलदायिनः॥
यथायथोपासते तं फलमीयुस्तथा तथा।
फलोत्कर्षापकर्षौ तु पूज्य-पूजानुसारतः॥
मुक्तिस्तु ब्रह्मतत्त्वस्य ज्ञानादेव न संशय।
स्वप्रबोधं विना नैव स्वस्वप्नो हीयते यथा॥
अद्वितीये ब्रह्मतत्त्वे स्वप्नोऽयमखिलं जगत्।
ईशजीवादिरूपेण चेतना चेतनात्मकम्॥ इति।

ननु प्रत्यगभिन्नमेकमेवाद्वितीयं ब्रह्मेति भवतां राद्धान्तः। "ईश्वराः सर्व एवैते" इत्युक्त्या तु "पुत्रलिप्सया देवं भजन्त्या भर्ताऽपि नष्टः" इति न्यायेन जीवेश्वराभेदं साधयितुं प्रवृत्तै र्भवद्भिः सर्ववादिसिद्धान्त सिद्ध ईश्वराभेदोऽपि नाशितः स्यात्। न च बहूनां विकल्पेन सर्वेश्वरत्वसंभवः। वस्तुनि विकल्पायोगात्। नापि समुच्चयेन, परस्परेशितृत्वापत्तेः। नापि कल्पभेदेन व्यवस्थया, सर्वेषामप्यैश्वर्यस्य कालतः परिच्छिन्नतया न कस्यापि सर्वेश्वरत्वमिति दोषापातात्। तथा च "वृद्धिमिष्टवतो मूलं विनष्टम्" इति न्यायापातः।

न चाश्वत्थादीनां कथमपीश्वरत्वं सम्भवति। प्रत्यक्षादिविरोधात्। सर्वेषामीशाङ्गत्वाङ्गीकारे च तस्य साङ्गत्वेन घटादिवद् विनाशापत्तेः। ब्रह्मादीश्वरत्वप्रतिपादकवचनानां तेषां परस्परोत्कर्षापकर्षवचनानां च व्यवस्थाभावादप्रामाण्यप्रसङ्गः। गतञ्च जीवेश्वरकोटित्वव्यवस्थया तत्प्रयुक्तबन्धमोक्षादिव्यवस्थया, तत्प्रयुक्तश्रुत्यादिप्रामाण्येन च।

तस्मात्कथं ब्रह्मादीनामीश्वरकोटित्वं कथं च तेषामत्यन्ताभेदः, का च तदुत्कर्षापकर्षप्रतिपादकवचनानां व्यवस्था, कथं च तत्तन्माहात्म्यवाक्यानामेक-

वाक्यता। ब्रह्मादीनां जीवकोटित्वे च का तदीश्वरत्वबोधकवचनानां गतिः। कथं च जीवेश्वरयोरभेदः। कथं च जीवानामन्योऽन्यमैक्यम्। कथं च ब्रह्मणो नात्मनां भेदाभावः। कथं च तेषामितरेतरमपि भेदाभाव इति सर्वं सम्यगुपपादनीयम्, येन स्वसिद्धान्तःप्रकृतन्यायसंगतिश्चोभयं सिध्येत्। अन्यथा ईश्वराः सर्व एवेत इति यथा श्रुतोपगमे प्रकृतन्यायसङ्गतिसिद्धावपि "मण्डूकतोलन" न्यायेन स्वसिद्धान्तः प्रच्यवते "अस्यावयवभूतैः" इतिश्रुतेः।

सावयवत्वोपगमेचाश्वत्थादीनां जन्मनाशादिमत्त्वेनोपपन्नधर्मों विकरोति हि धर्मिणाम्" इति न्यायेन ब्रह्मणः कूटस्थत्वहानिरिति चेदुच्यते एक एवाद्वितीयो नित्यशुद्धवुद्धमुक्तस्वभावः कूटस्थः परमात्मा सर्वप्रपञ्चप्रकृतिभूतत्रिगुणमायोपहितः सन् सर्वनियन्तृत्वादन्तर्यामी कर्तुमकर्तुमन्यथाकर्तुं समर्थत्वात्परमेश्वर इत्युच्यते।

यथा चैक एव कृषीवलः क्षेत्रे बीजवापं कुर्वन् वापक इत्युच्यते, सस्यविशिष्टं तदेव क्षेत्रं जलसेकादिना रक्षन् पालक इति, अन्ते दात्रादिकमुपादाय तत्तदुपसंहरन् लावकइत्युच्यते तथैव एक एव परमात्मा स्वोपाधिभूतमायागुणत्रयभेदेन ब्रह्मविष्णुरुद्र-शब्दैरभिधीयते।

तत्र कारणीभूतरजोगुणग्रहणेन सर्वप्रपञ्चस्य स्रष्टा सन् स एव ब्रह्मेत्युच्यते। हिरण्यगर्भस्तु यद्यपञ्चीकृतभूतस्रष्टृत्वान्न ब्रह्मा तथापि पञ्चीकृतभूतभौतिकयोः स्रष्टृत्वात्।

स वै शरीरी प्रथमः स वै पुरुष उच्यते।
आदिकर्ता स भूतानां ब्रह्माग्रे समवर्तत॥
तस्मादेतद् ब्रह्म नामरूपमन्नञ्च जायते।

इत्यादि श्रुतौ,

"वेदस्तत्वं तपो ब्रह्म ब्रह्मा विप्रः पजापतिः।" इत्यादि कोशे इतरत्रापि चेति-हासपुराणादौ क्वचिद् ब्रह्मेत्युपचर्यते। स च जीव एव कल्पान्तरीयहिरण्यगर्भाहंग्रहोपा-सनया तद्भावं प्राप्त इति प्रसिद्धमितिहासादिषु।

अतस्तदीश्वरत्वप्रतिपादकानि वचनानि तदन्तर्यामिपराणि एवं विराड्वह्नि-सूर्येन्द्रादीश्वरत्वप्रतिपादकान्यपीति बोध्यम्। तदन्तर्यामिणश्च "वस्तुतस्तदभेदेऽपि भेदव्यपदेशाच्चान्यः" इत्यादिसूत्रेभ्यः "य आदित्ये तिष्ठन्नादित्यमान्तरो यमादित्यो न वेदयस्यादित्यः शरीरं य आदित्यमान्तरो यमयति भीषास्माद्वातः पवते" इत्यादि श्रुतिभ्यश्च व्यावहारिकभेदोऽपि स्वीक्रियते।

कारणीभूतसत्त्वगुणमादायाखिलं चराचरप्रपञ्चं पालयन् स एव विष्णुरित्युच्यते। कारणीभूततमोगुणमादाय सकलं भूतभौतिकप्रपञ्चमुपसंहरन् स एव रुद्र इत्युच्यते।

एवञ्चैकस्यैव वस्तुनः परब्रह्मपरमशिवमहाविष्णुवासुदेवादिशब्दगोचरस्य चतुर्मुखचतुर्भुजपञ्चमुखरूपाः पुंमाकारा वाणीलक्ष्म्युमारूपाः स्त्र्याकारा लीलाविग्रहाः ।

ननु चतुर्मुखाकारो विधेर्विग्रहः चतुर्भुजाकारो हरेर्विग्रहः पञ्चमुखाकारो हरस्य, भारत्याकारोविधेर्लक्ष्म्याकारो हरेर्भवान्याकारो हरस्येति विशिष्य वक्तव्यं गुणत्रयभेदेन तदवच्छिन्नानां भेदात् । तथा कथमेकस्येत्युक्तम् इति चेच्छृणु—चतुर्भुजशरीरिणः पालकत्वप्रयोजकं विष्णुत्वमेवेति वक्तुमशक्यं दैत्यसंहारादिरूपस्य तमोऽवच्छिन्नरुद्रकार्यस्य दर्शनात् । तस्य सुरादिरक्षणफलकत्वेऽपि तमःकार्यत्वेन तदवच्छिन्नरुद्रकार्यत्वात् । एवं पञ्चमुखाकारावच्छिन्नस्येशस्य त्रिपुरादिदैत्यसंहर्तृत्वेऽपि न केवलरुद्ररूपत्वनिर्णयः । संहारस्य देवादिपालनफलकत्त्वेन विष्णुकार्यत्वात् । "शिव एको ध्येयः शिवङ्करप्रज्ञा च तस्मात्प्रसृता पुराणी" इत्यादि श्रुत्या "स मोचयति सुप्रीतिः मोचयामि श्वपाकं वा" इत्यादि स्मृत्या च मुक्तिज्ञानादिरूपस्य सत्त्वावच्छिन्नविष्णुकार्यस्य प्रतीतेश्च—

तमूचुर्भ्रांतरो रुद्रः सेवितः सात्त्विकैर्जनैः ।
मोचयेत्सत्त्वसंयुक्तः पूजयेशमतो हरम् ॥ इति ।

कौर्मे तु रुद्रस्य साक्षादेव सत्त्वयोगः प्रतिपादितः । एतेन तामसत्वेन रुद्रस्यापकर्षप्रलापो मूर्खाणां निरस्तः । निरन्तरं दुःखमयसंसारपरिवृत्तिश्रान्तानां जीवानां कञ्चित्कालं विक्षेपविगमसमुल्लसदात्मानन्दानुभवेन विश्रान्तिं सम्पादयितुकामस्य तस्य संहाराय तमोग्रहणस्य दुश्चिकित्स्यव्रणपीडितानां व्रणं शिशमयिषोः शस्त्रग्रहणस्येव निदानज्ञस्य भिषजो रुग्णहिंसां प्रयुञ्जतो न किञ्चिदपि नैर्घृण्यं घृणैवाऽत्र प्रयोजिकेति शिवपुराणोक्तन्यायेन निरतिशयकरुणाम्बुधित्वलिङ्गात् । ब्रह्मकोटौ गुणवश्यत्वासंभवात् । निद्रालस्यादेस्तमःकार्यस्य । तत्राप्रसिद्धेश्च । तमोयोगमात्रेण तत्पारवश्यस्य शङ्कितुमशक्यत्वात् । अन्यत्राप्यतिप्रसङ्गादुत्कर्षापकर्षभावे श्रुतिस्मृतिविगीतत्वस्य प्रतिपादयिष्यमाणत्वाच्च ।

सत्त्वोद्रिक्तस्ततो ब्रह्मा शून्यं लोकमवैक्षत ।

इति विष्णुपुराणादौ ब्रह्मणोऽपि सत्त्वगुणयोगेन विष्णुरूपत्वं प्रतीयते । भारते चातिवृद्धिगतानां प्रजानां विधेः कोपाग्निनोपसंहर्तृत्वस्मरणेन तमोयोगप्रतीतेः रुद्ररूपत्वञ्चावगम्यते ।

"सत्त्वं देवा हरादयः" इति वासिष्ठे तु सर्वेषां तुल्यत्वेन शुद्धसत्त्वप्रधानमायोपाधित्वमुक्तम् । एवं भवान्या दैत्यादि संहर्तृत्वेऽपि पालनरूपविष्णुकार्यप्रतीतेः ।

सैषा प्रसन्ना वरदा नृणां भवति मुक्तये ।

इति मुक्तिरूपसत्त्वावच्छिन्नकार्यप्रतीतेः महिषासुर युद्धेऽसंख्यगणोत्पादकत्वरजोवच्छिन्नकार्यप्रतीतेश्च न केवलरुद्ररूपत्वनिर्णयः ।

नन्विदं मुक्तिप्रदत्वादिकं मार्कण्डेये महालक्ष्म्या उक्तं सा च पार्वत्या अन्यैव समष्टिरूपेति मार्कण्डेयप्राधानिकरहस्ययामलगततन्माहात्म्यपर्यालोचनेनावगम्यते। तथा च कथमनेन पार्वत्या मोक्षदातृत्वाद्युक्त्या विष्ण्वादिरूपत्वं प्रतिपाद्यते इति चेत्सत्यम्, एवं प्रतीयते—त्वादृशानामनालोचितान्यशास्त्राणां त्वद्विपरीतानां तु गौर्या अवतार एवासत्यसन्दिग्धाविपर्यस्तं ज्ञानं वर्तते। तथा हि—

मार्कण्डेये चण्डिकाया महिषशुम्भनिशुम्भादिहन्तृत्वं यदुक्तं यच्च "नन्दगोपगृहे जाता यशोदागर्भसंभवा" इत्यादिना नन्दपुत्रीत्वादिकं यच्च—

तत्रैव च बधिष्यामि दुर्गमाख्यं महासुरम्।
दुर्गादेवीति विख्यातिं तदा यास्याम्यहं भुवि॥

इति दुर्गापदवाच्यत्वं तस्या यदुक्तं तत्सर्वं हरिवंशादौ भगवत्याः पार्वत्याः स्पष्टमेव प्रतिपादितम्।

तत्र तावद् हरिवंशे—

शुम्भश्चैव निशुम्भश्च सगणौ सूदितौ मया। इति पार्वत्यैव स्वस्याः ससैन्य-शुम्भनिशुम्भहन्तृत्वमुक्तम्। तत्रैव प्रद्युम्नस्तवे—

ओं नमः कात्यायन्यै ग्रहस्य जनन्यै नमः।
नमस्ये शुम्भमथिनीं शुम्भहृद्विदारिणीम्॥
विन्ध्यवासिनीं दुर्गघ्नां रणदुर्गां रणप्रियाम्।
त्रिशूलिनीं नमस्यामि महिषासुरघातिनीम्॥

इत्यादिना सप्तशतिका मध्यमोत्तमचरितयोर्वर्णितं सर्वं ग्रहजननीविषयकं प्रतिपादितम्। प्रथमचरितदेवता तु योगनिद्रारूपा महाकाल्याख्या तामसी शक्तिरिति प्रसिद्धम्। सा च रुद्रान्तर्भूतैवेति न विवादः। तथा च कथं सप्तशतिकाप्रतिपाद्या पार्वत्या अन्येति विचार्य वक्तव्यम्। यद्यपि मार्कण्डेये शुम्भनिशुम्भयोः शूलखड्गाभ्यां हननं प्रसिद्धम्। अत्र तु मुद्गरेणोक्तमिति विरोधः प्रतीयते तथापि सकलमन्वतरादि-भेदेन समाधातुं सुकरः। यतो मार्कण्डेय एवोक्तं स्वयं भगवत्या—

वैवस्वतेऽन्तरे प्राप्तेऽष्टाविंशतितमे युगे।
शुम्भो निशुम्भश्चैवान्यावुत्पत्स्येते महासुरौ॥
नन्दगोपगृहे जाता यशोदागर्भसंभवा।
ततस्तौ नाशयिष्यामि विन्ध्याचलनिवासिनी॥ इति।

हरिवंश एवानिरूद्धस्तोत्रे विचार्यमाणेऽपि मार्कण्डेयोक्तं शुम्भादिहन्तृत्वादिकं सर्वं भगवत्या उमाया एवेत्यवधार्यते। तद्यथा—

मेध्यां गोकुलसम्भूतां नन्दगोपस्य नन्दिनीम् ।
निशुम्भशुम्भमथनीं गजकुम्भोपमस्तनीम् ॥
वरां कुमारप्रभवां पार्वतीं पर्वतात्मजाम् ।
नमोऽस्तु ते महिषमहासुरार्दिनि-
नमोऽस्तु ते भयङ्करि विद्विषां सदा ॥ इत्यादि ।

हरिवंश एव श्रीविष्णुकृते स्तवे, भीष्मपर्वणि धनञ्जयकृते पुराणान्तरगतोमा-माहात्म्यवचनेषु च विचार्यमाणेष्वप्येवमेव प्रीतीयते । ग्रन्थविस्तरभयान्नेह वचनानि लिख्यन्ते ।

मात्स्ये तु दाक्षीं प्रस्तुत्य—

त्रैलोक्य सुन्दरीमेतामुययेमे पिनाकधृक् ।
या देवी सौभाग्यमयी भुक्तिमुक्तिफलप्रदा ॥

तामाराध्य पुमान् भक्त्या नारी वा किं न विन्दति । इत्याद्युक्त्या मोक्षप्रदत्वादिकं विष्णुकार्यं साक्षादेव तस्या उक्तम् । यानि तु मार्कण्डेयप्राधानिकरहस्ययामलवचनानि उमादीनां महालक्ष्मीविभूतित्वप्रतिपादकानि प्रागुदाहृतानि तानि विष्ण्वादीनां नृसिंहादिविभूतित्वप्रतिपादकवचनानीवोपासनार्थं स्तुतिपराणि ।

वस्तुतस्तु तान्यपि विचार्यमाणान्यभेद एव पर्यवस्यन्ति । "गौरी त्वमेव शशिमौलिकृतप्रतिष्ठा" इत्यादीनि तु साक्षादेवाभेदपराणि । एतादृशानामपि विभूतिविभूतिमद्भावपरत्वाङ्गीकारे "त्वमक्षरं परं ब्रह्म" इत्यादेरपि तादृशवाक्यनिकरे पठितस्य तथात्वप्रसङ्गेनाक्षरस्य परब्रह्मणोऽपि स्तुत्यश्रीरामादिविभूतित्वप्रसङ्गः । अवताराव-तारिणोश्चात्यन्ताभेदमनुपदमेवोपपादयिष्याम इत्युपरम्यते ।

उमा या स हरिः साक्षाद् यो हरिः सा शिवा स्मृता । सौरेऽस्याः साक्षाद् विष्णुत्वमुक्तम् ।

न मे नारायणाद्भेदो विद्यते हि विचारतः ।
तन्मायाऽहं परं ब्रह्म स विष्णुः परमेश्वरः ॥ इति ।

कौर्मे तु शिवयैव विष्णुरूपत्वं स्वस्योक्तम् । वाजसनेयिपाठे—

"श्रीश्च लक्ष्मीश्च" इति "ह्रींश्च लक्ष्मीश्च" ।

तैत्तिरीयके—

तत्रमाहेश्वरी लक्ष्म्या मूर्तिः मूर्तिमतः प्रभोः ।

इत्यादिना,

तस्याङ्कमन्डलारूढा शक्तिर्माहेश्वरी परा ।
महालक्ष्मीरिति ख्याता श्यामा सर्वमनोहरा ॥ इत्यन्तेन ।

वायुसंहितायाम्—

सदा शिवाङ्कमारूढा शक्तिरिच्छा कृपा शिवा।
महालक्ष्मीरितिख्याता ॥ इति।

शैवे च—

साक्षान्महालक्ष्मीरूपत्वं शिवाया उक्तम्।

लक्ष्मीतन्त्रे—

लक्ष्म्याः काल्पादेः स्वावतारोक्तिरपि स्वोमयोरभेदोपपादनपरा।

हिरण्यगर्भौ रुचिरौ स्त्रीपुंसौ कमलासनौ। इत्यादि प्रागुदाहृतप्राधानिकरहस्य-वाक्येन च रमाया रजोवच्छिन्नब्रह्मरूपत्वं प्रतीयते। अतोऽस्याः न केवलविष्णुरूपत्व-निर्णयः। न चैतद्वाक्यानुसारेणास्याः केवलं विधिरूपत्वमेवास्तु कौर्मे प्रथमाध्याये लक्ष्म्युत्थाने—

"इयं सा परमा शक्तिर्मन्मयी ब्रह्मरूपिणी"। इति विष्णुवचनेन विष्णुपुराणादि-वचनैस्त्वास्या विष्णुरूपत्वस्यापि प्रतीतेः। एवं "मोक्षदे मुक्तिमार्गे" इत्यादीतिहास-पुराणतन्त्रादिवचनेषु सरस्वत्याः मोक्षज्ञानपालनादिरूपसत्त्वावच्छिन्नविष्णुकार्यप्रतीतेः।

सत्त्वाख्येनातिशुद्धेन गुणेनेन्दुप्रभं दधौ। इति प्राधानिकरहस्ये श्वेतरूपत्वाद् साक्षात्सत्त्वयोगोक्तेश्च न केवलब्रह्मरूपत्वनिर्णयः सम्भवति। एतच्च शिवेऽपि तुल्यम्।

तस्मात् सर्वाणि शरीराणि सर्वेषामिति सिद्धम्। चतुर्भुजादिशरीरावच्छिन्ने क्लृप्तकार्यस्य पञ्चमुखादावपि प्रतीतेः। तथा चैकरूपत्वमेव सर्वेषां पर्यवसन्नम्।

तदुक्तं हरिवंशे—

यो विष्णुः स तु वै रुद्रो यो रुद्रः स पितामहः।
एकमूर्तिस्त्रयो देवा रुद्रविष्णुपितामहाः॥
वरदा लोककर्तारो लोकनाथाः स्वयम्भुवः।
अर्धनारीश्वरास्ते तु व्रतं तीव्रं समाश्रिताः॥ इत्यादि।

लैङ्गे च—

लिङ्गान्यलिङ्गस्य तथा मायया विततानि तु।
तेभ्यः प्रधानं देवानां त्रयमासीच्छिवात्मकम्॥
एकस्मात् त्रिष्वभवद्विश्वमेकेन परिरक्षितम्।
एकेन च हृतं विश्वं व्याप्तं त्वेवं शिवेन तु॥ एतेन।

रुद्रो नारायणश्चैवेत्येकं सत्त्वं द्विधाकृतम् ।
लोके चरति कौन्तेय व्यक्तिस्थं सर्वकर्मसु ॥ इत्यादि ।

भारतादिवचदमाश्रित्य शिवविष्णुमूर्ती एव शुद्धसत्त्वावच्छिन्नेश्वररूपे । ब्रह्मा तु जीव एवेश्वराविष्टः स्रष्टा भवतीति ब्रुवाणा निरस्ताः ।

यस्तु हरादिषु क्वचित्कस्माच्चित्कदाचित्केनचिन्निमित्तेन लीलया वा कस्यचिदाविर्भाव उच्यते, सोऽपि विचार्यमाण ऐक्य एव पर्यवस्यति । तथा हि क्वचिद्विधेरुभयोराविर्भाव उच्यते । तथा "यजुर्भ्योऽथ विष्णुम्" इत्यादिश्रुतावष्टमूर्तिब्राह्मणे च भविष्ये च—

रुद्रोऽस्य मनसो जातो विष्णुर्जातश्च वक्षसः । इति ।

एवमितरत्रापि पुरादिषु क्वचित् क्वचिद् हरादुभयोः ।

तथा च श्रुतिः—

"अण्डं हिरण्मयं रुद्रस्य वीर्यात्प्रथमं संबभूव तत्र ब्रह्मा विष्णुर्जातो जातवेदाः" इत्यादिः ।

तथा हरिवंशे हरं प्रति हरिवचनम्—

अहं ब्रह्मा कपिलोऽथाप्यनन्तः-
पुत्राः सर्वे ब्रह्मणश्चातिवीर्याः ।
त्वत्तः सर्वे देवदेव प्रसूता-
एवं सर्वेशः कारणात्मा त्वमीड्यः ॥ इति ।

क्वचिद् हरेरुभयोराविर्भावोऽभिधीयते । यथा—"नारायणाद् ब्रह्मा जायते, नारायणादिन्द्रो जायते नारायणाद् द्वादशादित्या रुद्रः सर्वे देवाः" इति नारायणोपनिषदि ।

यथा च कैलासयात्रायाम्—

त्वद्विस्तारो यतो ब्रह्मा अहं भूतपतिस्तथा ॥ इति हरिं प्रति हरवचने ।

एवमन्यान्यपि शैववैष्णवादिमतेषु समुदाहृतान्येतादृशानि वचनानि स्मर्तव्यानि । एतानि च श्रुत्यादिवाक्यानि कल्पभेदेन व्यवस्थितानि । एतच्चातिविस्तरेण श्रीवसिष्ठो वासिष्ठे श्रीरामं प्रति कथयामास । तत्रैवेश्वरश्चाह वासिष्ठं प्रति—

एवं सर्गे हि कस्मिंश्चित्प्रथमो हि सदाशिवः ।
कस्मिंश्चिद् विष्णुरित्युक्तो नाभ्युत्पन्नः पितामहः ॥
पितामहः स कस्मिंश्चित् कस्मिंश्चिदपि चेतरः ।

इतरः दुर्गाभैरवविनायकादिः । तेषामपि तत्तन्माहात्म्यप्रतिपादकपुराणादिभागेषु ब्रह्माद्युद्भवहेतुत्वसिद्धेः । केषाञ्चिद्वचनानामन्यत्र दर्शितत्वाच्च ।

भगवान् वायुश्चाह—

ब्रह्मनारायणौ पूर्वं रुद्रः कल्पान्तरेऽसृजत् ।
कल्पान्तरे पुनर्ब्रह्मा रुद्रविष्णू जगन्मयः ॥
विष्णुश्च भगवांस्तद्वद् ब्रह्माणमसृजत्पुनः ।
नाराणं पुनर्ब्रह्मा ब्रह्माणञ्च पुनः शिवः ॥
एवं कल्पेषु कल्पेषु ब्रह्मविष्णुमहेश्वराः ।
परस्परस्माज्जायन्ते परस्परजयैषिणः ॥
तत्तत्कल्पान्तवृत्तान्तमधिकृत्य महर्षिभिः ।
प्रभावः कथ्यते तेषां परस्परसमुद्भवात् ॥ इति ।

कौर्मे च—

क्वचिद् रुद्रः क्वचिद् विष्णुः क्वचिद् ब्रह्मा प्रशस्यते ।
नानेन तेषामाधिक्यं न्यूनत्वं वा कथञ्चन ॥
वत्तत्कल्पान्तवृत्तान्तमधिकृत्य महर्षिभिः ।
तानि तानि प्रणीतानि विद्वांस्तत्र न मुह्यति ॥

इत्युक्तम् । अन्यत्रापि—

शैवाशाक्ताश्च गाणेशा सौरा विष्णुप्रपूजकाः ।
विद्विषन्ति मिथो भ्रान्त्या तेषां भक्तिस्तु निष्फला ॥
सिद्धान्ता बहवः प्रोक्ता श्रुत्या नानाप्रयोजनैः ।
परन्त्वस्या अभिप्रायं जानाति विरलः कृती ॥
अनेक कार्यसिद्ध्यर्थं रूपं बहुविधं विभोः ।
तत्कार्याज्ञानतो मूढैस्तत्पाखण्डं प्रतिष्ठितम् ॥ इति ।

मार्कण्डेये च "विष्णुः शरीरग्रहणम्" इत्यादिना दुर्गाया हरिहरादीनामाविर्भावमुक्त्वा यस्तच्छरीरेभ्योऽस्या आविर्भाव उक्तः सोऽपि कालभेदेन व्यवस्थितः । एवं गणेशपुराणादौ यो विनायकादेर्ब्रह्माद्याविर्भाव उक्तः सोऽपि कदाचित् परेशस्य तत्तदात्मनैवाविर्भावस्ततो ब्रह्मीद्याविर्भावइति समाधातुं शक्य इति न कुत्रापि विरोधः । एतादृशैरपि वाक्यैः सर्वेषां सर्वशरीरेषु विद्यमानतैवावगम्यते, नहि यद् यत्र नास्ति तत्ततः प्रादुर्भवति, सिकताया अपि तैलप्रादुर्भावप्रसङ्गात् ।

तस्मादेकमेवाद्वितीयं ब्रह्माघटनघटनापटीयस्या माययाऽनेकमिव सशरीरमिव परस्पराज्जातमिवान्योन्यस्मिन् प्रविष्टमिव च प्रतीयते ।

तदुक्तं हरिहरावुद्दिश्य हरिवंशे—

यथा जले जलं क्षिप्तं जलमेव तु तद्भवेत् ।
रुद्रे विष्णुः प्रविष्टस्तु तथा रुद्रमयो भवेत् ॥

अग्निमग्निः प्रविष्टस्तु अग्निरेव यथा भवेत् ।
तथा विष्णुं प्रविष्टस्तु रुद्रो विष्णुमयो भवेत् ॥

रुद्रस्य प्रभवो विष्णुर्विष्णोस्तु प्रभवः शिवः ।
एक एव द्विधा भूतो लोके चरति नित्यशः ॥ इति ।

तत्रैव कैलासयात्रायां चोक्तम्—

तौहि देवौ महादेवौ एकीभूतौ द्विधाकृतौ ।
एकात्मानौ जगद्योनी सृष्टिसंहारकारकौ ॥
परस्परसमावेशाज्जगतः पालने स्थितौ । इति ।

विष्णु पुराणे च हरं प्रति हरिवचनम्—

भवानहं च विश्वात्मन् एक एव हि कारणम् ।
जगतोऽस्य जगत्यर्थे भेदेनावामस्थितौ ॥ इत्यादि ।

"एक एव द्विधा भूत" इत्यादौ माययेतिपदमिव पदंचाध्याहार्यम् । एकात्मानाविल्याद्यनन्तरवचनेभ्यः ।

एतेन कतिपयश्रुतिपुराणादिपाठितानि कस्यचित् सर्वकारणत्वादिवचनानि अवलम्ब्य तस्योत्कर्षसमर्थनं निरस्तम् । तेषां वाक्यानामभेद एव तात्पर्यात् । अत एव तत्तत्स्तवेषु तत्तद्वाचकशब्दानामप्यभेद उपलभ्यते ।

यदाह हरो हरिं प्रति कैलासयात्रायाम्—

अहं त्वं सर्वगो देवस्त्वमेवाहं जनार्दन ।
आवयोरन्तरं नास्ति शब्दैरर्थैर्जगत्पते ॥
नामानि तव गोविन्द यानि लोके महान्ति च ।
तान्येव मम नामानि नात्र कार्या विचारणा ॥ इति ।

एतानि च सर्वाणि वचनानि अत्यन्ताभेद एव समञ्जसानि भवन्ति । अन्यथा त्वदुक्तरीत्या शिवादीनामेकैकगुणावच्छिन्नत्वे गुणभेदेन तदवच्छिन्नभेदाद् विष्णुशिवादिपदानां शिवबिल्वादि नामत्वासंभवेनासंगतेः ।

यत्तु शैवैरभिहितं शुद्धसत्त्वप्रधानत्रिगुणमायोपहित एकैकगुणावच्छिन्नमूर्तित्रितयात्परस्तुरीयश्चन्द्रकलावतंसनीलकण्ठत्रिनयनोमासहायशुद्धसत्त्वमूर्त्युपहितः परम-

शिव एव मुमुक्षुभिरुपास्यः तदुपासनाया मोक्षं प्रत्यन्तरङ्गसाधनत्वात्। उमासहायं परमेश्वरमित्यादि श्रुतेः। विधिहरिहरास्तस्य विभूतयः स ब्रह्मा स शिव इत्यादिश्रुतेः।

यस्याज्ञया जगत्स्रष्टा विरञ्चिः पालको हरिः।
संहर्ता कालरुद्राख्यो नमस्तस्मै पिनाकिने ॥ इत्यादिपुराणवच-

नेभ्यश्चेत्यादि।

यच्च वैष्णवा वदन्ति—शुद्धसत्त्वप्रधान मायोपाधिको मूर्तित्रयपरो वासुदेव-महाविष्ण्वाख्यः परेशः शङ्खादिपाणिर्लक्ष्मी सहायः शुद्धसत्त्वप्रधानमूर्तिः ब्रह्मादयस्तस्य विभूतयः स ब्रह्मा स शिवः सेन्द्र इत्यादि श्रुतेः। तद्भक्तिर्मोक्षं प्रत्यन्तरङ्गसाधनम्। शिवादिभक्तिरीषद्व्यवधानेन—

आरोग्यं भास्करादिच्छेत् श्रियमिच्छेद् हुताशनात्।
ज्ञानं महेश्वरादिच्छेन्मोक्षमिच्छेज्जनार्दनात् ॥ इति।

पुराणवचनात्।

मां च योऽव्यभिचारेण भक्तियोगेन सेवते।
स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते ॥

इति भगवद्वचनाच्चेत्यादि। तत्सर्वमप्येतेन निराकृतम्। सर्वेषां शुद्धसत्त्वप्रधान-त्रिगुणमायोपहितत्वसाधनेनात्यन्ताभेदसाधनात्। किञ्च मैत्रेयोपनिषदि मायोपाधिकं परं ब्रह्म प्रस्तुत्य तस्य प्रोक्ता अग्र्यास्तनवो ब्रह्मरुद्रो विष्णुरिति परविग्रहाणां मध्ये ब्रह्मादिविग्रहत्रयस्यैवाग्र्यत्वं श्रूयते।

यदि हि ततोऽपि प्राचीनं मूर्त्यन्तरं परब्रह्मणः स्यात् तदा कथं तेषामन्यत्वं भवेत्। अग्रे भवा ह्यग्र्या उच्यन्ते। अतो ब्रह्मादिमूर्तित्रयातिरेकेण न परस्य तुरीय-मूर्तिः। "सर्वं विशेषणं सावधारणम्" इति न्यायेन च मूर्तित्रयस्य न कस्याश्चिन्मूर्तेः पाश्चात्यत्वम्। अनेन त्रयाणामपि महाकल्पादौ स्वत एवाविर्भावः। परस्परस्मादुदयस्तु अवान्तरकल्पेषु कदाचित्कुतश्चिन्निमित्ताल्लीलया वा भवतीति सूचितम्।

अमुमेवार्थमुपोद्बलयन्ति अत्रितपश्चर्यायां भागवतवचनानि। तत्र ह्यत्रेस्त-पश्चर्यायां प्रस्तुत्य—

शरणं तं प्रपत्स्येऽहं य एव जगदीश्वरः।
प्रजामात्मसमां मह्यं प्रयच्छत्विति चिन्तयन् ॥ इति।

तस्य तत्फलाभि सन्धि चोक्त्वा अथ चिराद्वर प्रदानाय ब्रह्मादीनां त्रयाणां सन्निधाने सति स्तुतिप्रणामाद्युपचारानन्तरं तान् प्रत्यत्रेः—

एको मया हि भगवान् विविधप्रधानै-
चितीकृतः प्रजननाय कथं नु यूयम्।
अत्रागतास्तनुभृतां मनसोऽपि दूराद्,
ब्रूत प्रसीदत महानिह विस्मयो मे ॥ इति प्रश्ने
यथा कृतस्ते संकल्पः भाव्यं तेनैव नान्यथा।
सत्संकल्पस्य ते ब्रह्मन् यद् वै ध्यायसि तद् वयम् ॥ इति

तेषां प्रतिवचनोपन्यासेन ब्रह्मादिमूर्तित्रयातिरेकेण परस्य सर्वैश्वर्याभिव्यक्तिस्थानभूतं तुरीयं मूर्त्यन्तरं नास्तीति व्यक्तीकृतम्। तत्सत्त्वे तेनैवरूपेणाविर्भावापत्तेः। इतरथा ऋषेः सत्यसंकल्पत्वविरोधात्।

न च गजेन्द्रमोचनस्थल इव ध्यातृभावगृहीतेन रूपेणाविर्भाव इत्यपीह वक्तुं शक्यम्, एकोभयेत्यादिप्रश्नानुपपत्तेः तस्मात्ते तेभ्यस्त्रिभ्यः परस्य तुरीयविग्रहस्योपगमो युक्तः। एतेषां सर्वपरत्वप्रतिपादकासंख्यवचनविरोधाच्च। शिवादेरेकैकस्यापि लीलाविग्रहा बहव इति पुराणादिषु प्रसिद्धम्।

न च तेषु यद्यपि उत्कर्षापकर्षवार्ताऽप्यस्ति एकस्यैव विशुद्धसत्त्वप्रधानमायोपहितस्य परब्रह्मणस्तत्तदाकारैर्विवर्तमानत्वात्तथाप्युपासकप्रेमास्पदे कस्मिंश्चिद्विग्रहे तत्प्रेमाधिक्यार्थमुत्कर्षं प्रकल्प्यायं सर्वपरस्तुरीयोऽन्य एतद्विभूतय इति शास्त्रेणोच्यते।

तथा च न प्रागुदाहृतानां परमशिवादिवोधकवचनानां विरोधः। शिवाद्युपासनायाश्च तौल्येनैव ज्ञानद्वारा मोक्षसाधनत्वम्। न तु साक्षात्, "तमेव विदित्वाऽति मृत्युमेति नाऽन्यः पन्था विद्यतेऽयनाय" इति श्रुतेः।

एतेन मोक्षं प्रति अन्तरङ्गत्वबहिरङ्गत्वकल्पना शैवानां वैष्णवानाञ्च निरस्ता, सर्वेषामत्यन्ताभेदस्य प्रतिपादनात्। स्मर्यते च सर्वेषां भक्तेच्छानुसारेण सममेव मोक्षभोगप्रदत्वादिकम्। शिवशक्तिगणेशार्कविष्णुरूपात्स ईश्वरः उपासनानुसारेण भक्तेभ्यो भुक्तिमुक्तिद इत्यादि च।

किञ्च यमेन्द्रादीनां नचिकेतुप्रतर्दनादिमोचकत्वं श्रूयते। स्मर्यते च मोक्षधर्मे—

कुण्डधाराख्यमेघस्य विप्रमोचकत्वं शिवस्य मोचकत्वोक्त्यनन्तरम्। एवमन्येऽपि कुर्वन्ति देवाः संसारमोचनमित्यनुशासने च। प्रागुदाहृतेष्वनुदाहृतेष्वपि च पुराणेषु सूर्याग्न्यादेः स्वभक्तमोचकत्वं स्मर्यते।

एवञ्च हरिहरादौ न सुधियां मोचकत्वामोचकत्वविप्रतिपत्तिर्युक्ता। किन्तु सर्वेषां भक्तेर्निष्कामाया निष्कामकर्मणाञ्च ज्ञानद्वारा मुक्तेः सकामानां भुक्तेश्च हेतुत्वमिति बोध्यम्।

एतेनोभयफलकाया हरभक्तेरेकफलहरिभक्तेरुत्कर्षोऽप्यपास्तः। अन्यथा यव व्रीह्यादिवद्विकल्पानुपपत्तेः। यानि च—

"ध्यायन् मुनिर्गच्छति भूतयोनि-
समस्त साक्षि तमसः परस्तात्"

"मां च योऽव्यभिचारेण" इत्यादीनि शिवविष्ण्वादिभक्त्याः स्वरूपावस्थानलक्षणमोक्षप्रतिपादकानि तान्यपि वचनान्तरविरोधेन "वृद्धकुमारीवाक्य" न्यायेन भक्तेः परम्परया मोक्षहेतुत्वप्रतिपादनपराणीति बोध्यम्। न च "ज्ञानं महेश्वरादिच्छेन्मोक्षमिच्छेज्जनार्दनात्" इत्यत्रापि फलभेदोऽस्ति। न हि ज्ञानं विना मोक्षोऽस्तीत्युक्तमेव। न च ज्ञाने सति मोक्षविलम्बोऽस्ति, "विदित्वामृत्युमेति" "ब्रह्मविद् ब्रह्मैव भवति" इत्यादि श्रुतेः।

"ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति" इति स्मृतेः।

देहात्मज्ञानवज्ज्ञानं देहात्मज्ञानबाधकम्।
आत्मन्येव भवेद् यस्य स नेच्छन्नपि मुच्यते ॥

इति भगवत्पादवचनाच्च।

"श्रेयांसि तत्र खलु सत्त्वतनो नृणां स्युः" इत्यपि न विरुद्धम्। सर्वेषां सत्त्वतनुत्वस्य साधितत्वात्। एक एवेति संख्यैक्यावधारणपरं, संजातविरोध्युपक्रमविरोधेन श्रुत्याद्यसंख्यवचनविरोधेन च तत्र सत्त्वतनोरित्यन्वयासंभवात्। नृणां मध्ये सत्त्वतनोरित्यन्वयसंभवाच्च।

तेषु वर्तमानात्सत्तामात्रशरीरात्प्रत्यगभिन्नत्वेन साक्षात्कृतात्परात्मनस्तदात्मनावस्थानलक्षणं श्रेयो भवतीत्यर्थसंभवाद् बहुवचनमादरार्थम्।

तस्मान्न किमपि वाक्यं भेदसाधकं तत्साधने प्रयोजनाभावात्। किन्तु किञ्चित्साक्षादभेदप्रतिपादकं किञ्चित् परम्परया तत्र पर्यवसन्नम्।

अत एवोक्तं शास्त्रतात्पर्याभिज्ञैर्वृद्धैः—

मया पुराणोपपुराणयुक्ताः-
साङ्गाश्च वेदाः स्मृतयः समस्ताः।
शास्त्राणि सर्वाणि विलोकितानि-
न क्वापि दृष्टः शिवविष्णुभेदः ॥ इति।

अपि च भेदस्य प्रामाणिकत्वे तद्दर्शननिन्दा न स्यात्। दृश्यते च सा। तथा च नारदीये—

हरिरूपी महादेवो लिङ्गरूपी जनार्दनः।
ईषदप्यन्तरं नास्ति भेदकृन्नरकं व्रजेत् ॥ इति।

कौर्मे चेश्वरगीताधिकारं प्रस्तुत्योक्तम्—

अहं नारायणो योऽहमीश्वरो नात्र संशयः।
नान्तरं ये प्रपश्यन्ति तेषां देयमिदं परम्॥

ममैषा परमा मूर्तिर्नारायण समाह्वया।
सर्वभूतात्मभूतस्था शान्ता चाक्षरसंज्ञिता॥

येत्वन्यथा प्रपश्यन्ति लोके भेदधियो जनाः।
न ते मां संप्रपश्यन्ति जायन्ते च पुनः पुनः॥

ये त्विमं विष्णुमव्यक्त मां च देवं महेश्वरम्।
एकीभावेन पश्यन्ति न तेषां पुनरुद्भवः॥

तस्मादनादिनिधनं विष्णुमात्मानमव्ययम्।
मामेव च प्रपश्यध्वं पूजयध्वं तथैव च॥

येऽन्यथा संप्रपश्यन्ति मत्वेमं देवतान्तरम्।
ते यान्ति नरकान् घोरान् हृतेषु च व्यवस्थितिम्॥

इति। इदञ्च विधिभेददर्शननिन्दाया अप्युपलक्षम्। तथा च भविष्पोत्तरे—

विष्णोरन्यं तु पश्यन्ति ये मां ब्रह्माणमेव च।
कुतर्कमतयो मूढाः पच्यन्ते नरकेष्वधः॥

येऽतिमूढा दुरात्मानो भिन्नं पश्यन्ति मां हरेः।
ब्रह्माणं च तथा तेषां भ्रूणहत्यासमं त्वघम्॥ इति।

अन्यत्रापि—

शिवस्य हृदयं विष्णुर्विष्णोश्च हृदयं शिवः।
ईषदन्तरकं कृत्वा रौरवं नरकं ब्रजेत्॥ इति।

शैवे च विधिं प्रति शिवः—

त्वां वै समाश्रिता ये च मामेव समुपाश्रिताः।
अन्तरं यश्च जानाति निरये पतति ध्रुवम्॥ इति।

कर्मविपाकस्मृतौ च—

यो ब्रह्मविष्णुरुद्राणां भेदमुत्तमभावतः।
साधयेदुदरव्याधियुक्तो भवति मानवः॥ इति।

वायुश्चाह—

अयं परस्त्वयं नेति संरम्भाभिनिवेशिनः।
यातुधाना भवन्त्येव पिशाचाश्च न संशयः॥ इति।

ये तु वैष्णवंमन्याः शिवद्वेषं कुर्वन्ति शैवम्मन्या वा विष्णुद्वेषं तेषां दुर्गतेः रूपं किं वक्तव्यम् । यथाह भगवान् युधिष्ठिरं प्रति भविष्योत्तरे—

वैष्णवो मम भक्तो वा शिवनिन्दां करोति यः ।
न याति वैष्णवं लोकं स गच्छेन्नरकं ध्रुवम् ॥
मम भक्तः शिवद्वेषी मद्द्वेष्टा च शिवप्रियः ।
तावुभौ नरकं यातो यावच्चन्द्रदिवाकरौ ॥ इति ।

भारते च शिवं प्रति—

यस्त्वां द्वेष्टि स मां द्वेष्टि यस्त्वामनु स मामनु । इत्यादि ।
ध्यानं योगस्तपस्तप्तं ज्ञानयज्ञादिको विधिः ।
तेषां विनश्यति क्षिप्रं ये द्विषन्ति पिनाकिनम् ॥
यो मां समाश्रयेन्नित्यमेकान्तं भावमाश्रितः ।
विनिन्दन् देवमीशानं स याति नरकं ध्रुवम् ॥
तस्माद्धि परिहर्तव्या निन्दा पशुपतेः द्विजाः ।
कर्मणा मनसा वाचा तद्भक्तेष्वपि यत्नतः ॥
ये तु दक्षाध्वरे शप्ता दधीचेन महर्षयः ।
भविष्यन्ति कलौ भक्तैः परीहार्याः प्रयत्नतः ॥
द्विषन्तो देवमीशानं युष्माकं वंशसंभवाः ।
शप्ताश्च गौतमेनोर्व्यां न संभाष्या द्विजोत्तमैः ॥ इति च ।

कौर्मे च—

परात्परतरं यान्ति नारायणपरा जनाः ।
न ते तत्र गमिष्यन्ति ये द्विषन्ति महेश्वरम् ॥ इति,

हरश्चाह हरिं प्रति कैलासयात्रायाम्—

यश्च त्वां द्वेष्टि गोविन्द स मां द्वेष्टि न संशयः । इत्यादि ।

शैवे च—

मम ध्येयो भवांश्चैव तव ध्येयो ह्यहं तथा ।
आवयोरन्तरं नैव ह्यणुमात्रं विचारतः ॥
मद्भक्तोऽपि परोभूत्वा यस्ते निन्दां करिष्यति ।
तस्याहं सकलं पुण्यं भस्मीकृत्याशु रोषतः ॥
नरके पातयिष्यामि त्वद्द्वेषात् पुरुषोत्तम । इति ।

तत्रैव हरिश्चाह हरं प्रति—

क्षणमात्रमपि च ते ध्यानं वै परमात्मनः ।
चेतसो दूरतो मे वै नैव गच्छेत्कदाचन ॥
मम भक्तश्च यो नित्यं तव निन्दां करिष्यति ।
तस्य वै निरये वासं प्रयच्छे नियते ध्रुवम् ॥
त्वद्भक्तो यो भवेन्नित्यं मद्भक्तः स उदाहृतः ।
एवं यो वै विजानाति तस्य मुक्तिर्न दुर्लभा ॥

कौर्मे च ऋषीन् प्रति हरः—

मूर्खं वा पण्डितं वापि ब्राह्मणं वा मदाश्रयम् ।
मोचयामि श्वपाकं वा न नारायणनिन्दकम् ॥ इति ।

अत एवातीव दुर्लभं शतमखादिप्रार्थनागोचरीभूतं स्वगणभावं प्राप्तेनापि घण्टाकर्णेन विष्णुद्वेषिणा तपसाराधितः सततं स्तुतोऽपि च मुक्तये प्रार्थितो महेशो न तस्मै मुक्तिं ददौ ।

यथाह श्रीकृष्णं प्रति—

आगतोऽहं महाशैलात् कैलासाद् भूतसेवितात् ।
अहं पिशाचवेषेण संविष्टः पापकर्मकृत् ॥
सततं दूषयन् विष्णुं घण्टामाबध्य कर्णयोः ।
मम न प्रविशेन्नाम विष्णोरिति विचिन्तयन् ॥
अहं कैलासनिलयमासाद्य वृषभध्वजम् ।
आराध्य तं महादेवमस्तुवं सततं शिवम् ॥
ततः प्रसन्नो मामाह वृणीष्वेति वरं हरः ।
ततो मुक्तिर्मया तत्र प्रार्थिता देवसन्निधौ ॥
मुक्तिं प्रार्थयमानं मा पुरा प्राह त्रिलोचनः ।
मुक्तिप्रदाता सर्वेषां विष्णुरेव न संशयः ॥
तस्माद् गत्वा च बदरीं तत्राराध्य जनार्दनम् ।
मुक्तिं प्राप्नुहि गोविन्दान्नरनारायणाश्रमे ॥ इति ।

अत्र प्रसन्न इत्यनन्तरमिवेत्यध्याहार्यम् । यतः प्रसन्नतामुद्राप्रदर्शनेन केवलं तं वञ्चितवान् न तु प्रसन्नः ।

यश्च त्वां द्वेष्टि गोविन्द स मां द्वेष्टि न संशयः । इत्यादिना तद्वचनविरोधेन गोविन्दद्वेषिणं प्रति प्रसन्नताऽयोगात् । कथमन्यथा पशुपतिस्तं संसृतिबन्धान्न मोचयेत् ।

न च तद्भक्तेर्मुक्तिहेतुत्वं मुक्तिदातृत्वं च तस्य नास्त्येवेति भ्रमितव्यम्, "अथाहैनं ब्रह्मचारिण ऊचुः किं जप्येनामृतत्वं ब्रूहि इति ह सोवाच याज्ञवल्क्यः शतरुद्रीयेणेति एतानि ह वा अमृतस्य नामधेयानि एतैर्हं वा अमृतो भवतीति यः शतरुद्रीयमधीते सोऽग्निपूतो भवति स वायुपूतो भवति सुरापानात्पूतो भवति ब्रह्महत्यायाः पूतो भवति, शिव एको ध्येयः शिवङ्करः, प्रज्ञा च तस्मात्प्रसृता पुराणी,

उमासहायं परमेश्वरं प्रभुम्,
त्रिलोचनं नीलकण्ठं प्रशान्तम् ।
ध्यात्वा मुनिर्गच्छति भूतयोनिं-
समस्तसाक्षिं तमसः परस्तात् ॥

ये भक्ता वरदं देवं शिवं रुद्रमुमापतिम् ।
इह लोके सुखं प्राप्य ते यान्ति परमां गतिम् ॥

सर्वग्रहैर्गृहीतान् वै सर्वपापसमन्वितान् ।
स मोचयति सुप्रीतः शरण्यः शरणागतान् ॥

यद्यनुत्पन्नविज्ञानो विरक्तः प्रीतिसंयुतः ।
यावज्जीवं जपेद् युक्तः प्रणवं ब्रह्मणो वपुः ॥

अथवा शतरुद्रीयं जपेदामरणाद् द्विजः ।
एकाकी यतचित्तात्मा स याति परमां गतिम् ॥

वसेदामरणाद् विप्रो वाराणस्यां समाहितः ।
सोऽपीश्वरप्रसादेन याति तत्परमं पदम् ॥

तत्रोत्क्रमणकाले तु सर्वेषां चैव देहिनाम् ।
ददामि मत्परं ज्ञानं येन मुच्येत बन्धनात् ॥

येऽपि येऽपि वसन्तीह नीचा वै पापयोनयः ।
सर्वे तरन्ति संसारमीश्वरानुग्रहाद् द्विजाः ॥

वर्णाश्रमविधिं कृत्स्नं कुर्वाणो मत्परायणः ।
तेनैव जन्म नाप्नोति ज्ञानं लब्ध्वा शिवं पदम् ॥

शिवमेभिः स्तुवन् देवं नामभिः पुष्टिवर्द्धनैः ।
नित्ययुक्तः शुचिर्भक्तः प्राप्नोत्यात्मानमात्मना ॥

एतद्धि परमं ब्रह्म परं ब्रह्माधिगच्छति ।
मोचयामि श्वपाकं वा ॥

इत्यादि कोटिशः श्रुतीतिहासपुराणादिवचनानामप्रामाण्यापत्तेः । काश्यां स्थावर-जङ्गमनिखिलजीवजातमोचकत्वप्रतिपादकानन्तवचनविरोधापत्तेः । तदभिधायकशम्भु-

शङ्करादिशब्दानां डित्थादिशब्दवदानार्थक्यापत्तेः। तन्निर्वचनाभिधानसंसक्तानां "नित्यदा यत्करोषि शम्" इत्याद्यनेकवचनाप्रामाण्यापत्तेश्च।

तस्मात्स्वभक्तिफलस्य मोक्षफलकज्ञानस्य प्रतिबन्धकनारायणद्वेषापनोदायत्तेन प्राप्तस्य शिवानुयायिष्वनुपपन्नेन श्रोत्रियब्राह्मणवधेनानुमितस्य राक्षसभावस्यानिवर्तनाय चेयं महेश्वरोक्तिः। हरिद्वेषेऽपगते च तस्य राक्षसभावापगमो ज्ञानलाभश्च—

यस्याङ्गानि तदा विष्णुः पिशाचस्याथ सर्वतः।
करेण मृदुना देवः पापान्निर्मोचयन् हरिः॥
ततस्तस्याभवद्रूपं कामरूपसमप्रभम्॥ इत्यादिना

ज्ञानवान् सत्त्वसम्पन्नः साक्षादिन्द्र इवापरः। इत्यन्तेन ग्रन्थेन तत्रैव प्रतिपादितौ।

तेन न तत्कृतमहेश्वरभक्तेर्वैयर्थ्यमपि। कथमन्यथा ब्रह्मवधादिनिरतस्य केशवे दृढा भक्तिर्ज्ञानलाभश्चातिशीघ्रमेव स्यात्।

जन्मान्तरसहस्रेषु तपोध्यानसमाधिभिः।
नराणां क्षीणपापानां कृष्णेभक्तिः प्रजायते॥

श्रवणायापि बहुभिर्यो न लभ्यः कदाचन।
मनुष्याणां सहस्रेषु कश्चिद् यतति सिद्धये।
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः॥

बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते। इत्यादिना तयोरतिदुर्लभताप्रतिपादनात्। तस्मात्प्रतिबन्धनिवृत्तौ महेश्वराराधनादेव तदात्मभूतनारायणाराधनावान्तरव्यापारः। कालस्य क्रमेण जीवन्मुक्तिविदेहमुक्तिफलकस्तत्त्वसाक्षात्कार उत्पन्नः। तज्जन्यत्वे सति तज्जन्यजनकत्वस्य व्यापारलक्षणत्वात्। तन्निष्ठाया हरिभक्तेश्च शिवभक्तिजन्यत्वात्। तज्जन्यज्ञानजनकत्वाच्च तद्व्यापारत्वम्।

यत्तु—

अक्षयः स्वर्गवासस्ते यावदिन्द्रोऽवशिष्यते। इत्यादिना।

नष्टे शक्रे ततः स्वर्गात्सायुज्यं मम गच्छतु। इत्यन्तेन भगवदाज्ञया स्वर्गगमनं तस्य वर्णितं तत्र तदपि ये स्वर्गमेव परमपुरुषार्थं मन्यन्ते तदवाप्तये च महाप्रयासानि कर्माणि कुर्वन्ति तैरपि तदवाप्तये भगवदाराधनमेव स्वल्पप्रयासं कर्तव्यमिति ज्ञापनार्थम्।

न तु वस्तुतो महेन्द्रप्रमुखैरपि प्रार्थनीयादतिदुर्लभादीश्वरसामीप्यात्प्रच्याव्य-तदपेक्षयाऽतितुच्छे कारागृहसदृशे स्वर्गे भक्तस्य पातनं युक्तं न हि परमेश्वराराधनमधोगतये। ब्राह्मे हीन्द्रत्वादेरपि हरिभक्तिफल विघ्नत्वंस्मर्यते—

विष्णुसंस्मरणक्षीणसमस्तक्लेशसंचयः ।
मुक्तिं प्रयाति स्वर्गाप्तिस्तस्य विघ्नोऽनुमीयते ॥
वासुदेवे मनो यस्य जयहोमार्चनादिषु ।
तस्यान्तरायो भो विप्र देवेन्द्रत्वादिकं फलम् ॥

इत्यादि । तथा च हरसामीप्यात् प्रच्याव्य स्वर्गे स्थापनं हरिभक्तिफलमिति वक्तुमपि न युक्तम् । यतोहि महेश्वरसामीप्यमपारपुण्यपुञ्जप्रसादितमहेश्वरप्रसादलभ्यं भवति । यथाऽऽहेशः स्वसामीप्यस्यातिदुर्लभतां सूचयन् दक्षं प्रति भारते—

परितुष्टोऽस्मि ते दक्ष स्तवेनानेन सुव्रत ।
बहुनात्र किमुक्तेन मत्समीपे भविष्यसि ॥ इति ।

ननु शताश्वमेधकर्तुः शक्रस्यापि क्षणमात्रमपि दुर्लभं ते सामीप्यमेकस्यापि क्रतोरसमापयितुर्मे कथं भविष्यतीति हृदिशङ्कमानं प्रत्याह—

अश्वमेधसहस्रस्य वाजपेयशतस्य च ।
प्रजापते मत्प्रसादात्फलभागी भविष्यसि ॥ इति ।

ननु कर्तुरेव कर्मणः फलं भवति अन्यथाऽतिप्रसङ्गात्तथा च तावदश्वमेधाद्यकतर्मे कथं तत्फलभाक्त्वमित्याशङ्कायामाह मत्प्रसादादिति ।

पुनरावृत्तिफलकैरश्वमेधादिभिरपि कर्मभिरपुनरावृत्तिरूपं ते सामीप्यं कथं स्यादिति दक्षचिन्तामालक्ष्याह—

भूयश्च ते वरं दद्मि तत्त्वं गृह्णीष्व सुव्रत ।
प्रसन्नवदनो भूत्वा तदिहैकमनाः शृणु ॥
वेदात् षडङ्गादुद्धृत्य सांख्याद् योगाच्च युक्तितः ।
तपः सुतप्तं विपुलं दुश्चरं देवदानवैः ॥
अपूर्वं सर्वतोभद्रं विश्वतोमुखमव्ययम् ।
अब्दैर्दशार्धसंयुक्तं गूढमप्राज्ञनिन्दितम् ॥
वर्णाश्रमकृतैर्धर्मैर्विपरीतं क्वचित्समम् ।
वेदान्तैरध्यवसितमत्याश्रममिदं व्रतम् ॥
मया पाशुपतं दक्ष शुभमुत्पादितं पुरा ।
तच्चास्तु ते महाभाग त्यज्यतां मानसो ज्वरः ॥ इति ।

न च इमे वराः स्वसामीप्यादन्य एवेश्वरेण दत्ता इति भ्रमितव्यम्, "बहुनात्र किमुक्तेन" इति प्रागेव वरपर्यवसानोक्तेः । एकयज्ञनाशादनन्तरं श्रीश्वरसामीप्यस्याश्वमेधसहस्रवाजपेयशतफलस्य च लाभे सति मानसज्वरावस्थानस्यैवासंभवेन पुनरा-

वृत्तिफलकेन नाशिफलेनाश्वमेधादिना मे कथं स्यादिति चिन्ता तु युज्यते, तत्समाधानेन तत्त्यागानुज्ञापि च शिवधर्मोत्तरे—

ये संप्राप्ताः परं स्थानं ध्यानयोगरता नराः।
न तेषां पुनरावृत्तिर्घोरसंसारसागरे॥

सर्वज्ञाः सर्वगाः शुद्धाः परिपूर्णमहेश्वराः।
शिवतुल्यबलोपेताः परं शिवपुरं गताः॥ इति।

शिवसामीप्यस्य माहात्म्यं स्मर्यते।

नन्विदं माहात्म्यं शिवपुरं गतानां शिवसामीप्यसारूप्यलक्षणं मोक्षं प्राप्तानाम्, अयं तु शिवानुचरो न शिवलोकवासीति चेच्छृणु तर्हि—

गीतज्ञो यदि गीतेन नाप्नोति परमं पदम्।
रुद्रस्यानुचरो भूत्वा तेनैव सह मोदते॥ इत्यादि

याज्ञवल्क्याद्युक्तरीया शिवप्रसादहेतुगानविद्याद्यभ्यासेन तत्फलं शिवानुचरत्वं प्राप्तानामपि। माहात्म्यं तेषां हिरण्यगर्भादिपदेभ्योऽपि श्रेष्ठं स्मरन्ति पौराणिकाः—

भिन्दन्ति शैलानुदधीन् पिवन्ति,
व्यत्यासयन्ति क्षितिमन्तरिक्षम्।
तृणीकृतब्रह्मपुरन्दराणां-
किं दुष्करं शङ्करकिङ्कराणाम्॥ इति।

ते हि साक्षाद् दिविषदो ह्यन्तरिक्षसदस्तथा।
पृथिवीषद इत्येते विज्ञेयास्त्रिविधा गणाः॥

इत्यादि पुराणाद्युपबृंहिता देवव्रतरुद्रोपनिषदादयश्च तेषामपरिमितं महिमानं ख्यापयन्ति। द्वितीयं जप्त्वा गाणपत्यमवाप्नोतीत्यथर्वशिरश्च महाफलं शिवानुचरत्वं कीर्तयद् देवतान्तरेभ्यस्तस्यातितरामुत्कर्षं स्फुटयति।

मात्स्ये च विधेरपि मोर्हयतुस्तारकाक्षस्य हन्तुर्नन्दिनः सगर्वं प्रलयन्तं विद्युन्मालिनं प्रत्युक्तिः—

आकाशं धारयेद्दोर्भ्यां पातयेद्वा दिवाकरम्।
सोऽपि मां शक्नुयान्नैव चक्षुर्भ्यामपि वीक्षितुम्॥ इति।

तत्रैवान्यत्रापि शिवचतुर्दशीव्रतमाहात्म्यातिशयम्—

सोऽश्वमेधसहस्रस्य फलं प्राप्नोति मानवः।

इत्यादिना,

न बृहस्पतिरप्यनन्तमस्याः,
फलमिन्द्रो न पितामहोऽपि वक्तुम् ।
न च सिद्धगणोऽप्यलं न चाहं,
यदि जिह्वायुतकोट्योऽपि वक्त्रे ॥

इत्यन्तेनोपन्यस्याश्वमेधसहस्रादिफलाप्त्या किं स्यादित्याकाङ्क्षायाम्—

गणाधिपत्यं दिविकल्पकोटि-
शतान्युषित्वा पदमेति शम्भोः । इत्युक्तम् ।

अनेनाप्यस्य हिरण्यगर्भादिपदेभ्योऽपि श्रैष्ठ्यमवगम्यते ।

तत्रैवोमां प्रतीशोक्तिः—

यैरहं तोषितः पूर्वं त एते मनुजोत्तमाः ।
मत्समीपमनुप्राप्ता मम हृद्याः शुभानने ॥
कामरूपा महोत्साहा महारूपगुणान्विताः ।
कर्मभिर्विस्मयं तेषां प्रयामि बलशालिनाम् ॥
चराचरस्य जगतः सृष्टिसंहरणक्षमाः ।
बह्मविष्ण्विन्द्रगन्धर्वैः सकिन्नरमहोरगैः ॥
उपासितोऽप्यहं नित्यं नैतैर्विरहितो रमे ॥ इति ।

एवं पुरान्तरेष्वपि बोध्यम् ।

भविष्यसि गणेशानः कल्पान्तेऽनुग्रहान्मम ।

इति कौर्मवाक्यैकवाक्यत्वे तु भारतीयं दक्षाय सामीप्यदानमपि गणेशत्वदानमेवेति तदेवाश्वमेधसहस्रादिफलम् ।

अत एवोक्तमभियुक्तैः—

भजेम भवदन्तिकं प्रकृतिमेत्य पैशाचिकीं-
किमित्यमरसम्पदः प्रमथनाथ नाथामहे ।
महाभवनदेहली विकटतुण्डदण्डाहति-
स्फुटन्मुकुटकोटिभिर्मघवदादिभिर्भूयते ॥

इति बहुगणसहायस्य चास्य गणाधिपतित्वमवगम्यते । "आगतोऽहं महाशैलात्कैलासात्" इति तदुक्त्या कैलासवासित्वञ्च । तथा च कथं तस्य स्वर्गगमनं भगवत्प्रसादलभ्यं स्यात् । एतादृशस्यापि विष्णुद्वेषे प्रवृत्तिस्तु वैकुण्ठवासिनोरपि जयविजययोः सनकादिशासने प्रवृत्तिरिव विष्वक्सेनस्य भैरवप्रतिरोधे प्रवृत्तिरिव चाघटनघटनापटीयस्याःपरमेश्वरमाययेतिबोध्यम् ।

अन्येषां शैवम्मन्यानां विष्णुद्वेषिणां कैमुतिकन्यायेन दुर्गतिसूचनार्थं हरिद्वेष-सूचनार्थंञ्चेदमुपाख्यानम् ।

वामने हि दर्शनायागतानां गणानां मध्ये बहूनां करेण समाश्वासनं केषाञ्चिदुत्था-यालिङ्गनं कृतवन्तमीशं प्रति तेषां बोधनाय नन्दिना वैषम्यहेतौ पृष्टे हरेर्भेदबुद्धि त्यक्त्वा यैरुपासितोऽहं तेऽनघा मेऽङ्गस्पर्शयोग्याः, यैस्तु तं निन्दद्भिः पूजितस्तेऽघयुक्तास्तदयोग्याः । किं बहुना क्रकचोपमया धियैकविग्रहस्य मे विदारणान्नरकयोग्या-नप्येतान् स्वयशोरक्षणार्थं न तत्र पातितवानस्मि । एषां भक्तिस्तु तद्योग्यैवेतीशोक्त्या स्पष्टीकृतमिदत्यलम् ।

तस्मादुक्ताभिप्रायैव भगवतस्तस्य स्वर्गगमनानुज्ञा । स तु महेश्वरसमीप एवा-गत इति वस्तुगतिः ।

अत एव श्रीकृष्णस्य दर्शनार्थं वरदानार्थं चागतेनेश्वरेण सहगतानां गणमुख्यानां वर्णनप्रसङ्गे तस्यादावेव वर्णनम्—

तस्याग्रे समपश्यन्त भूतसङ्घाः सहस्रशः ।
घण्टाकर्णो विरूपाक्षः कुण्डधारः कुमुद्वहः ॥ इति ।

नचायमन्य एवास्त्वितिवाच्यम्, अत्र प्रमाणाभावात् । तस्य स्वर्गगमनासंभवस्य दर्शितत्वाच्च । एतेन ये केचिद् गरुडगामिनोमार्गमध्ये निशानयनायोगं मन्यमानाः शिवानुयायिनो ब्रह्मवधविष्णुद्वेषयोः प्रवृत्तेरनुपपत्ति शङ्करेऽस्य मुक्तिदातृत्वप्रतिपादका-नन्दश्रुत्यादिविरोधं भारतेऽन्यत्रापि दृश्यमानं भगवतः परस्त्रीविषयकशृङ्गारं घण्टाकर्णेन—

गोपीनां स्तनमध्येतु क्रीडते काममीश्वरः ।
योऽसौ पिबंस्तदधरं मायामानुषदेहवान् ॥

गोपीभिरास्वाद्यमुखो विविक्ते,
शेते स्म रात्रौ सुखमेव केशवः ।
स्तनान्तरेष्वेव तदा च तासां-
कामीव कान्ताधरपल्लवं पिबन् ॥

इति वर्णितं विरुद्धं तस्य शम्भोः सामीप्यादतिदुर्लभात्प्रच्याव्य स्वर्गे प्रेषणं चायुक्तम्, अग्रे वर्णनीयेश्वरसहागतभूतसङ्घस्यादौ तद्वर्णनविरुद्धं च भारतीयश्लो-करचनाया विलक्षणमस्य श्लोकरचनां च मन्यमानाः केनचित्कल्पयित्वा इदं घण्टाकर्णाख्यानं हरिवंशे कैलासयात्रायामाक्षिप्तमिति मन्यन्ते ते निरस्ताः । बहूनां विरोधानां समाहितत्वात् । गरुडगामिनोऽपि भगवतो मार्गमध्यवर्तिभक्तानुग्रहार्थं तत्र

निशात्रयने तूपपत्त्यभावात्। भारतेऽन्यत्रापि वर्णितस्यापि भगवतः परस्त्रीविषयकशृङ्गाररसस्यात्र वर्णने विरोधाभावात्। प्रत्युत क्वचित्पुराणे विस्तृतस्यात्र संक्षेपेणोक्तिसंभवाच्च। रचनावैलक्षण्यन्तु तेषामेव सूक्ष्मदृशां भातीत्यलमतिविस्तरेण।

एवं हरिविधिभक्तास्यापि दक्षस्येशद्रुह आख्यानमपि भारतादौ शिवद्वेषिणामन्येषां वैष्णवानां कैमुतिकन्यायेन दुर्गतिसूचकं द्वेषापाये सुगतेश्च सूचकमिति बोध्यम्।

अपि च तामसत्वात्कृष्णो रुद्रः सात्त्विकत्वात् शुक्लस्य हरेर्ध्यानाद् भृङ्गकीटवत् शौक्ल्यं गतः, एवं श्वेतो हरिः कृष्णस्य शम्भोर्ध्यानात् कार्ष्ण्यं गत इति पुराणे प्रसिद्धम्।

शिवाय विष्णुरूपाय विष्णवे शिवरूपिणे ॥ इति हरिवंशे च स्पष्टीकृतमिदम्। तथा च शुक्लं हरं द्विषन्तो हरिमेव द्विषन्तीति कथं ते वैष्णवाः। एवं श्यामं हरिं द्विषन्तो हरमेव द्विषन्तीति कथं ते शैवा इति ध्येयम्।

अथ प्रकृतमनुसरामः। वाल्मीकीये रामायणे "श्रीरामो भरतानुमते गतः" इति शङ्कमानायाः कौशल्यायाः श्रीरामस्य वने गमनं ममानुमतं भवतीति प्रत्ययोत्पादनार्थं भरतो बहून् शपथान् कृत्वाऽतिघोरतममेतं शपथं मत्वा सर्वशपथावसाने चकार—

भक्त्या विवदमानेषु मार्गमाश्रित्य पश्यतः।
तस्य पापेन लिप्यते यस्यार्योऽनुमते गतः ॥ इति।

तत्रादौ हरिहरादेरित्यध्याहार्यम्। मार्गं तत्तन्माहात्म्यप्रतिपादकं शास्त्रमाश्रित्य, अत्र शास्त्रमितिवक्तव्ये मार्ग मित्युक्तेः। शास्त्रदर्शितं तत्तदुपासनामार्गं तत्र प्रवृत्त्यर्थं तत्तदुत्कृष्टतावर्णनं चाश्रित्य न तु तदाशयं वुध्द्वेत्यभिप्रायः। विवदमानेषु—शिव एव सर्वोत्तमोऽन्ये निकृष्टाः विष्णुरेव सर्वोत्तमोऽन्ये निकृष्टा इत्यादि कलहं कुर्वत्सु यत् पापम्, अथ च विवदमानेषु पश्यतः शृण्वतो यत्पापं तस्य पापस्य सम्बन्धिना तत्सदृशेनेति यावत् पापेन पापान्तरेण नत्वस्य पापेनान्यस्य लेपः संभवति। तेनेति पाठस्तु सुगमः।

अत्रापि शृण्वत इति वक्तव्ये पश्यत इत्युक्तिस्तद्विवादं श्रुत्वा स्वभक्त्यनुसारेण राम उत्कृष्टोऽन्येऽपकृष्टा इति यः पश्यत्यनुभवति तस्य यत्पापमित्यभिप्रांया। यद्यप्यन्यतमविग्रहावच्छिन्नेश्वरनिन्दां शृण्वत उदासीनस्यापि पापं भवत्येव।

कर्णौ पिधाय निरियाद् यदकल्प ईशे,
धर्मावितर्यसृणिभिर्नृभिरस्यमाने।
छिन्द्यात्प्रसह्यरुशतीमसतां प्रभुश्चे—
जिह्वामसूनपि ततो विसृजेत्स धर्मः ॥

इति भागवते भगवत्येश्वरनिन्दाश्रवणस्यापि निषेधात्। तथापि तस्येदमित्थमेवेत्यनुभवतः सकाशादस्ति किञ्चिदश्मलोष्ठन्यायेन पापाल्पत्वमित्यभिप्रायः।

तथा स्कान्देऽपि उमापरीक्षार्थमागतेन वटुरूपिणा शिवेन शिवनिन्दायां कृतायां तां शृण्वतीः सखीः प्रत्युमोक्तिः—

आर्याणां निन्दनं श्रुत्वा येन यान्ति त्वरान्विताः।
स्थानान्तरं ह्यप्रतिष्ठास्तेऽपि स्युः पापयोनयः॥ इति।

तेऽप्यप्रतिष्ठा भवन्तीत्यत्रापिशब्दः कैमुतिकन्यायद्योतकः। यदीशनिन्दां श्रुत्वा ये शीघ्रं देशान्तरं न यान्ति तेऽप्यप्रतिष्ठा, न विद्यते प्रतिष्ठोत्तमलोकावासिलक्षणा येषां तादृशाः सन्तः पापयोनयः कृमिमशकादिजन्मानः स्युर्भवन्ति तर्हि स्वयं निन्दकास्तादृशा भवन्तीति किमु वक्तव्यमिति।

यथाह तत्रैव भगवती—

ये निन्दकाश्च पापाश्च कृतघ्ना वेदनिन्दकाः।
वेदभ्रष्टा ह्यप्रतिष्ठा अवाच्याश्च मनीषिभिः॥ इति।

अत्र य इत्यनन्तरमीशस्येति शेषः।

उपमन्युश्चाह श्रीकृष्णं प्रति भारते—

यश्चाप्यसूयते देवं कारणात्मानमीश्वरम्।
स कृष्ण नरकं याति सह पूर्वैः सहात्मजैः॥ इति।

एवं हि दुर्गतिभिया शास्त्रे प्रवृत्तानामपि दुर्भगानां विरिञ्च्यादिष्वन्यतमभक्त्याऽन्यतमनिन्दादावनुरक्तानां बिल्वखल्वाटन्यायेन पुनर्दुर्गतौ प्रवेश इति कोटिशः श्रुतीतिहासपुराणादिवचनानि प्रतिपादयन्ति। ग्रन्थविस्तरभयाद् दिङ्मात्रमेवेह दर्शितम्।

यद्यप्यन्ततमपक्षपातेनान्यतमनिन्दादिनापि वर्तमानकाले भवति कश्चिद् हर्षविशेषस्तेषां नास्तिकसुहृदां तथापि कोशयानन्यायेन मिथ्यावादिनां तेषां परिणामेऽतिदुःसहं दुःखमित्यास्तिकैरवध्यवधादिवत्त्याज्योऽयं दुराग्रहः। तेषां च सङ्गोऽप्यवश्यमेव त्याज्यः। त्याज्या दुस्तटिनीतिन्यायात्। अन्यथा चौराध्वनि माण्डव्यनिग्रह इति न्यायेन तत्सङ्गिनामपि दुर्गतेरवर्जनीयत्वात्।

तत्तद्विग्रहावच्छिन्नेश्वराभेददर्शिनां त्वन्यतमविग्रहावच्छिन्नतदुपासकानां निष्कामानां नितरां निर्मलस्वान्तानां तत्प्रसादात्प्रत्यगभिन्नब्रह्मसाक्षात्कारेण मोक्षः। सकामानामप्यर्चिरादिमार्गेण सत्यलोकं गतानां हिरण्यगर्भेण सह मोक्षः।

तदुक्तमीश्वरगीतायाम्—

ये त्विमं विष्णुमव्यक्तं मां च देवं महेश्वरम्।
एकीभावेन पश्यन्ति न तेषां पुनरुद्भवः॥ इति।

अत्र हरिहरयोर्ग्रहणं काकदधिघातकन्यायेन विधेरप्युप्रलक्षणम्।

यथाह भगवान् दक्षं प्रति भागवते—

अहं ब्रह्मा च शर्वश्च जगतः कारणं परम् ।
आत्मेश्वर उपद्रष्टा स्वयं दृगविशेषणः ॥ इत्यादिना
त्रयाणामेकभावानां यो न पश्यति वै भिदाम् ।
सर्वभूतात्मनां ब्रह्मन् स शान्तिमधिगच्छति ॥ इत्यन्तेन,

एवं हरिहरद्वेषनिन्दा निन्दकं वचोऽप्युपलक्षणं बोध्यम् । किं बहुना सर्वदेहावच्छेदस्य सर्वेषु साधितत्वादेकनिन्दकः सर्वनिन्दक एकद्वेष्टा सर्वद्वेष्टा । एवं स्तुतिपूजादिष्वपि बोध्यम् ।

ब्रह्माण्डपुराणे हि ब्रह्मादिषूत्कर्षापकर्षप्रश्नमुपन्यस्य परेशस्यैकस्यैव शुद्धसत्त्वप्रधानत्रिगुणमायोपहितस्य चतुर्मुखादयस्तनवो न भेदलेशोऽप्यस्तीति बहुयुक्तिदृष्टान्तपूर्वकं सविस्तरमभिधाय "क्षणं वियोगो न ह्येषाम्" इत्यादिना रज आद्यवच्छिन्नानां सर्वेषां सर्वदेहावच्छेदं प्रसाध्य चोक्तम्—

एकामिह प्रशंसंस्तु सर्वा एव प्रशंसति ।
एकां निन्दति यस्तासां सर्वा एव विनिन्दति
तास्वेकं यजते यस्तु सदा स यजते त्रयम् ॥ इति ।

भारत्यादेर्ब्रह्मादिष्वन्तर्भावं सिद्धवत् कृत्वा त्रयमित्युक्तिः ।

किञ्च "यतो वा इमानि भूतानि जायन्ते, सदेव सोम्येदमग्र आसीत् एकमेवाद्वितीयम्, सोऽकामयत बहु स्यां प्रजायेय" इत्यादिनाऽखण्डाद्वितीयं ब्रह्म सृष्टेः प्रागासीत् । तस्मादेव च मायोपहितादभिन्ननिमित्तोपादानात्सत्तास्फूर्तिभ्यां सत्तास्फूर्तिमत् अन्ते च तत्रैव लीयते अतएव तदात्मकमित्युपपाद्यते तं त्वौपनिषदं पुरुषं पृच्छामि सर्वे वेदा यत्पदमामनन्तीत्यादिश्रुतिभिरुपक्रमोपसंहारैकरूप्यादिभिः षड्भिर्लिङ्गैश्च सर्वेषां वेदानां तत्रैव तात्पर्यम् ।

अतएव तदुपबृंहणभूतपुराणादेरपि तत्रैव पर्यवसानम् । अस्य महतोभूतस्त निःश्वसितमेवैतद् यद् ऋग्वेदो यजुर्वेदः सामवेद इत्याद्यागमेन तस्यैव वेदकर्तृत्वं प्रतिपाद्यते ।

अयमर्थो "जन्माद्यस्ययतः" "शास्त्रयोनित्वात्" "तत्तु समन्वयात्" इत्यादिसूत्रभाष्यादिषु प्रपञ्चितः ।

"पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः"

इत्यादिश्रुत्या च तस्यैव सर्वोत्कृष्टत्वं मुक्तप्राप्यत्वरूपपरमगतित्वञ्च प्रतिपादितम् ।

नारायणोपनिषदि च—

"अथ पुरुषो ह वै नारायणोऽकामयत प्रजाः सृजेयेति नारायणात्प्राणो जायते मनः सर्वेन्द्रियाणि च, खं वायुर्ज्योतिरापश्च पृथिवी विश्वधारिणी" इत्यादिना निखिलप्रपञ्चकारणत्वं विष्णोरभिधीयते।

अथ "नित्यो देव एको नारायणो ब्रह्मा च नारायणः"

इत्यादिना चाद्वितीयत्वं सर्वात्मत्वञ्चाम्नायते। स्वतोऽसङ्गोदासीनस्य कारणत्वासंभवान्मायोपहितस्य कारणत्वं वक्तव्यं तच्च मायित्वं "दैवी ह्येषा गुणमयी मम माया दुरत्यया" इति भगवद्वचनात्तस्यैवेति प्रतीयते।

"तद्विष्णोः परमं पदम्" इत्यादिश्रुत्या "यद् गत्वा न निवर्तन्ते तद् धाम परमं मम" इति भगवद्वाक्येन च,

विशुद्धं बोधनं नित्यमजमक्षयमव्ययम्।
अव्यक्तमविकारं यत्तद्विष्णोः परमं पदम्॥ इत्यादि।

विष्णुपुराणवचनेन च तस्यैव परमपदत्वमपि प्रतीयते।

अत्र सर्वत्र षष्ठी राहोः शिरः, आत्मनश्चैतन्यम् ममात्मेत्यादिवदभेदे प्रथमार्थे वा बोध्या। "एकस्त्वमग्र्यं परमं यत्पश्यन्ति त्वां सूरयो ज्ञानदृश्यम्" इत्यादौ सामानाधिकरण्यदर्शनात्। एतेन तद्विष्णोरित्यत्र भेदे षष्ठीं पञ्चमीं च मन्यमानाः परास्ताः।

"न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यः"

"मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय" इत्यादि स्मृत्या,

सत्यं सत्यं पुनः सत्यमुद्धृत्य भुजमुच्यते।
वेदाच्छास्त्रं परं नास्ति न देवः केशवात्परः॥ इत्यादि।

सर्वोत्कृष्टत्वप्रतिपादकपुराणवचनैश्च सर्वोत्कृष्टत्वमपि केशवस्यैव प्रतीयते। तथा—

नारायणपरा वेदा नारायणपरा मखाः।
वेदे रामायणे चैव पुराणे भारते तथा॥
आदावन्ते तथा मध्ये हरिः सर्वत्र गीयते।
वेदैरशेषैरहमेव वेद्यो-
वेदान्तकृद्वेदविदेव चाहम्॥ इत्यादिना

श्रुत्यादितात्पर्यभूमित्वं तत्कारणत्वं च हरेरेवावगम्यते।

अथर्वशीर्षोपनिषदि तु—

"ओं देवा ह वै स्वर्गलोकमायन्, ते देवा रुद्रमपृच्छन् को भवानिति सोऽब्रवीद-हमेकः प्रथममासं वृत्तानि च भविष्याणि च, नान्यः कश्चिन्मत्तो व्यतिरिक्तः" इत्यादिना शम्भोरेव सृष्टेः प्राग् विद्यमानत्वमद्वितीयत्वं जगत्कारणत्वं सर्वात्मत्वं चाम्नायते।

मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्। इति मायित्वमपि तस्यैव श्रूयते। न चात्र महेश्वरशब्दोऽन्यपरः। तस्मिन् मन्त्रवर्णे बहूनां शिववाचकानामेवशब्दानामुपलब्धेः।

दक्षश्च महेश्वरं प्रति निमन्त्रणाभावे—

सर्वभूतकरो यस्मात्सर्वभूतपतिर्हरः।
सर्वभूतान्तरात्मा च तेन त्वं न निमन्त्रितः॥

त्वमेव हीज्यसे यस्माद् यज्ञैर्विविधदक्षिणैः।
त्वमेव कर्ता सर्वस्य तेन त्वं न निमन्त्रितः॥

इति हेतूक्तिव्याजेन तस्य सर्वप्रपञ्चकारणत्वं सर्वभूतान्तरात्मत्वं सर्वयज्ञैर्यष्टव्यत्वं विशेष्यसम्बान्धनेतरयोगव्यवच्छेदिनैवकारेणान्ययष्टव्यत्वनिषेधं च प्रतिपाद्य तत्रैव हेत्वन्तरोक्तिव्याजेन शुद्धे तस्मिन्नसंभवि पूर्वोक्तकारणत्वोपपादकं मायित्वमपि तस्यैवाह स्म—

अथवा मायया देव सूक्ष्मया तव मोहितः।
एतस्मात् कारणाद्वापि प्रभो त्वं न निमन्त्रितः॥ इति।

हरिवंशे च हरं प्रति हरिवाक्यम्—

भूतं यस्माज्जगदत्यन्तधीर,
त्वत्तोऽव्यक्तादक्षरादक्षरेश।
तस्मात्त्वामाहुर्भव इत्येवभूतं-
सर्वेश्वराणां महतामत्युदारम्॥ इति।

अत्राक्षरेशेति संबोधनेनाक्षराया मायाया नियन्तृत्वं तस्याभिहितम्। कारणत्वं तु स्पष्टमेवोक्तम्। तथा—

यल्लिङ्गाङ्कं यच्च लोके भगाङ्कं-
सर्वं सोमरुचं स्थावरं जङ्गमञ्च॥ इति।

सर्वात्मकत्त्वमपि प्रतिपादितम्।

ईश्वराव्याकृतप्राणविराड्भूतेन्द्रियात्मकः।
शिवस्यैव विकारोऽयं समुद्रस्यैव वीचयः॥

प्रमाता च प्रमाणं च प्रमेयं प्रमितिस्तथा ।
चत्वार्येतानि रूपाणि शिवस्यैव न संशयः ॥

इति लैङ्गे । ईश्वरोऽत्र हिरण्यगर्भः । अव्याकृता समष्टिव्यष्ट्यात्मिका बुद्धिः । प्राणोऽपि तादृशो ग्राह्यः ।

"अयं प्रपञ्च एवं यो मां वेत्ति साङ्गान्" इति प्रागुदाहृतोपनिषदि साङ्गवेदप्रतिपाद्यत्वं तस्य श्रूयते ।

अत्र शम्भुज्ञानस्य साङ्गवेदज्ञानव्याप्यत्वोक्तेस्तज्जन्यत्वोपलम्भात्तद्विषयीभूतशम्भोस्तत्प्रतिपाद्यत्वनिश्चितेः ।

स्मर्यते च द्रोणपर्वान्तर्गतशतरुद्रीये—

वेदाः साङ्गोपनिषदाः पुराणाध्यात्मनिश्चयः ।
त्वं यज्ञो वरुणश्चासि त्वं गतिस्त्वं परायणम् ॥
त्वं भवस्त्वं महादेवस्त्वं धाम परमं पदम् ॥ इत्यादि ।

एवमेव तत्र तत्र स्थितैर्विविधैः प्रमाणै र्हेतुत्वप्राप्यत्वादिकमपि शिवस्यैवावगन्तव्यम् ।

अपि च भगवता गीतायाः सप्तमनवमदशमाध्यायेषु स्वस्य सर्वात्मसर्वाधिष्ठानत्वज्ञापको यो विभूतियोगोदर्शितः । अन्यत्रापि हरिमाहात्म्यप्रतिपादकेतिहासपुराणादिषु च, स मोक्षधर्मे दक्षस्तवे—

युगा निमेषाः काष्ठा त्वं नक्षत्राणि ग्रहाः कलाः ।
वृक्षाणां ककुदोऽसित्वं गिरीणां शिखराणि च ॥

व्याघ्रो मृगाणां पततां तार्क्ष्योऽनन्तश्च भोगिनाम् । इत्यादिना शम्भोर्दर्शितः ।

यच्चैकादशाध्याये तत्प्रत्यायकं विश्वरूपं हरिणा दर्शितं तदप्यत्र शिवस्य वर्णितम्—

भवच्छरीरे पश्यामि सोममग्निं जलेश्वरम् ।
आदित्यमथ वै विष्णुं ब्रह्माणं च बृहस्पतिम् ॥ इत्यादि ।

एवमन्यत्रापि शैवागमेषु सर्वत्र तद्वर्णनं तद्दर्शनं चोपलभ्यते । किञ्चैकादशे एव "अमी हि त्वां धृतराष्ट्रस्य पुत्राः" इत्यादिना "मयाहतांस्त्वं जहि" इत्यन्तेन हरिणा हता एव भीष्मादयोऽर्जुनेन हता इत्यवगम्यते ।

शतरुद्रीये—

संग्रामे निघ्नतः शत्रून् शत्रून् शरौघैर्विमलैरहम् ।
अग्रतो लक्षये यान्तं पुरुषं पावकप्रभम् ॥

ज्वलन्तं शूलमुद्यम्य यां दिशं प्रतिपद्यते ।
तस्यां दिशि विशीर्यन्ते शत्रवो मे महामुने ॥
तेन भग्नानरीन् सर्वान् मद्भग्नान्मन्यते जनः ।
तेन दग्धानि सैन्यानि पृष्ठतोऽनुदहाम्यहम् ॥
भगवंस्तन्ममाचक्ष्व को वै स पुरुषोत्तमः ।
शूलपाणिर्महाकृष्णस्तेजसा सूर्यसन्निभः ॥

इत्यर्जुनेन पृष्टः श्रीव्यासः—

प्रजापतीनां प्रथमं तैजसं पुरुषं प्रभुम् ।
ईशानं वरदं पार्थ संग्रामे लोमहर्षणम् ॥
शङ्करं सर्वलोकानां दृष्टवानसि शङ्करम् ।
तं गच्छ शरणं देवं देवादिं भुवनेश्वरम् ॥

इत्युपक्रम्य—

स शिवस्तात तेजस्वी प्रसादाद् याति तेऽग्रतः ।
यदत्र परमं गुह्यं स वै देवो महेश्वरः ॥ इति ।
पठ्यते सर्वसिद्धान्तैर्वेदान्ते यो महेश्वरः ॥ इति पाद्मे ।

तत्रैव—

यो देवः सर्वदेवानां ध्येयः पूज्यः सदा शिवः ।
स शिवः स महादेवः शङ्करश्च निरञ्जनः ॥
तस्मान्नान्यः परो देवस्त्रिषु लोकेषु विद्यते ।
महेश्वरः परं ब्रह्म शान्तः सूक्ष्मः परात्परः ॥
सर्वान्तरः सर्वसाक्षी चिन्मयः तमसः परः ।
निर्विकल्पो निराभासो निःशङ्को निरुपद्रवः ॥
निर्लेपः सकलाध्यक्षो महापुरुष ईश्वरः ।

इति सर्वाराध्यत्वमोक्षप्रदत्वसर्वोत्तमत्वसर्वोत्तरत्वसर्वाधिष्ठानत्वादिकमपि प्रतिपाद्यते ।

शतरुद्रीये च—

चराचरस्य जगतः प्रभुः स भगवान् हरः ।
तस्मात्परतरं नान्यत्किञ्चिदस्ति महेश्वरात् ॥ इति ।

हरिवंशे च—

नान्यस्त्वत्तः परः कश्चिद् देवदेव जगत्पतिः ॥ इति ।
महेशस्य प्रभुत्वादिकं प्रदर्शितं भवति ।

यथा—

लभते ततः कामान् मयैव विहितान् हि तान् ।
क्षिपाम्यजस्रमशुभान् आसुरीष्वेव योनिषु ॥
तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ।

इत्यादिना सर्वकर्मगलदातृत्वं तत्कारयितृत्वं जीवानां बन्धकत्वं मोचकत्वं च हरेर्निर्धार्यते ।

तथा—

स मोचयति सुप्रीतः शरण्यः शरणागतान् ।
आयुरारोग्यमैश्वर्यं वित्तं कामांश्च पुष्कलान् ॥
स ददाति मनुष्येभ्यः स चैवाक्षिपते पुनः ।
महेन्द्रादिषु देवेषु तस्यैवैश्वर्यमुच्यते ॥
स कामानां प्रभुर्देवो ये दिव्या ये च मानुषाः ।
समेधयति यन्नित्यं सर्वान् सर्वेषु कर्मसु ॥
शिवमिच्छन् मनुष्याणां तस्मादेष शिवः स्मृतः ।
सर्वथा यः पशून्पाति तैश्च यद्रमते पुनः ॥

तेषामधिपतिर्यच्च तस्मात्पशुपतिः स्मृतः ॥ इत्यादिना शतरुद्रीये तत्सर्वं पशुपतेः प्रतिपादितम् ।

"ब्रह्मादिस्तम्बपर्यन्तान् पशून् बद्ध्वा महेश्वरः"

इत्यादि प्रागुदाहृत वाक्येषु हिरण्यगर्भादिस्तम्बपर्यन्तजीवनिवहबन्धकत्वादिकं तस्योक्तम् ।

देव्यथर्वशीर्षे तु यत्सृष्टेः प्राग् विद्यमानाद्वितीयरूपत्वादिकं शिवस्योक्तं तत्सर्वं शिवाया अपि प्रदर्शितम् ।

हरिवंशे च श्री विष्णुप्रणीतोमास्तवे—

"एषैव सर्वभूतानां निष्ठा च परमा गतिः" इति तस्या एव सर्वाधिष्ठानत्त्व-मुक्तप्राप्यत्वञ्चोक्तम् । तत्रैव "लक्ष्मीरलक्ष्मीरूपेण दानवानां वधाय च" इत्यादिना "त्वयाव्याप्तमिदं सर्वं जगत्स्थावरजङ्गमम्" इत्यन्तेन तस्या विभूतियोगो वर्णितः ।

तथा भविष्ये भगवदुक्तिः—

यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति ।
तस्याहं नित्यदेहस्था स च नित्यं मयि स्थितः ॥
न पश्येत्सर्वभूतेषु न च सर्वं मयि स्थितम् ।
स तु पर्वतदुर्गेषु मार्गमाणो विनश्यति ॥ इति ।

मात्स्ये च—

सर्वंगा सर्वभूतेषु द्रष्टव्या परमेश्वरी।
सर्वलोकेषु यत्किञ्चिद्रहितं न तया तथा॥ इति।

मार्कण्डेये च—

तया विसृज्यते विश्वं जगदेतच्चराचरम्।
सैषा प्रसन्ना वरदा नृणां भवति मुक्तये॥
सा विद्या परमा मुक्तेर्हेतुभूता सनातनी।
संसारबन्धहेतुश्च सैव सर्वेश्वरेश्वरी॥

देवि प्रपन्नार्ति हरे प्रसीद,
प्रसीद मातर्जगतोऽखिलस्य।
प्रसीद विश्वेश्वरि पाहिं विश्वं-
त्वमीश्वरी देवि चराचरस्य॥

सर्वमङ्गलमाङ्गल्ये शिवे सवार्थसाधिके।
शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तुते॥

विश्वेश्वरी त्वं परिपासि विश्वं-
विश्वात्मिका धारयसीति विश्वम्॥ इत्यादिना

जगन्निमित्तकारणत्वं कर्मफलदातृत्वं मोचकत्वं बन्धकत्वं सर्वेश्वरत्वम्, आनन्दरूपत्वं सर्वपालकत्वं सर्वात्मत्वं सर्वाधिष्ठानरूपसर्वोपादानत्वं च तस्या दर्शितम्।

सनत्कुमारसंहितायाम्—

"विद्ये वेदान्तगीते श्रुतिपरिपठिते मोक्षदे मुक्तिमार्गे मार्गातीत स्वरूपे" इत्यादिना वेदान्तप्रतिपाद्यत्वमोक्षप्रदत्वादिकं श्री सरस्वत्या उक्तम्।

सरस्वतीं नमस्यामि चेतनां हृदि संस्थिताम्।
मतिदां वरदां चैव सर्वकामफलप्रदाम्॥

सुखमोक्षप्रदाम्!

इत्यादिना श्री बृहस्पतिस्तस्याश्चैतन्यरूपत्वमन्तर्यामिरूपेण सर्वहृदिस्थत्वं सर्वकामप्रदत्वमोक्षप्रदत्वादिकं चोक्तत्रान्। "तस्याः समुद्रा अधिक्षरन्ति तेन जीवन्ति प्रदिशश्चतस्त्रः क्षरत्यक्षरं तद्विश्वमुपजीवति" इत्यादि श्रुत्या चास्या जगदुत्पादकत्वपालकत्वादिकमुक्तम्।

अयमर्थः—

तस्याः वाचः सकाशात् समुद्रा मेघा नद्यश्च समुद्रवति जलमस्मादिदियिव्युत्पत्तेः अधि अधिकं प्रभूतमुदकं क्षरन्ति, वाग्देवतारूपेणान्तर्यामिणा प्रेरिता मेघादयो जलक्षर-

णादिकं कुर्वन्ति, अक्षरं प्रधानं तदधिष्ठितं सत् क्षरति ईक्षणादिघटाद्यन्तकार्याकारेण परिणमते, इति ।

अत्र तस्या इति स्त्रीलिङ्गनिर्देशेन तेनेति पुंलिङ्गनिर्देशेन चास्या मायामहेश्वरोभयरूपत्वं ध्वनितम्, तच्च मायोपहितब्रह्मरूपत्वे पर्यवस्यति ।

"ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्"

इति लक्ष्म्याः सर्वेश्वरत्वं श्रूयते । स्मर्यते चास्या जगत्कारणत्वसर्वात्मकत्वमोक्षप्रदत्वादिकम् ।

वैष्णवे—

नमस्ये सर्वभूतानां जननीमब्जसंभवाम् ।
त्वं सिद्धिस्त्वं स्वधा स्वाहा सुधा त्वं लोकपावनी ॥
सन्ध्या रात्रिः प्रभा भूतिर्मेधा श्रद्धा सरस्वती ।
यज्ञविद्या महाविद्या गुह्यविद्या च शोभने ॥
आत्मविद्या च देवि त्वं विमुक्ति फलदायिनी ।
महाविद्या विश्वरूपा सर्वरूपाद्युपासना ॥
मन्त्रविद्या सर्वविद्या कामकामेश्वरी तथा ।
आन्वीक्षिकी त्रयी वार्ता दण्डनीतिस्त्वमेव च ॥
सौम्यासौम्यैर्जगद्रूपैस्त्वयैतत्पूरितं जगत् ।
त्वया न रहितं किञ्चिद् भुवने भुवनेश्वरि ॥
त्वया देवि परित्यक्तं सकलं भुवनत्रयम् ।
विनष्टप्रायमभवत्त्वयेदानीं समेधितम् ॥
दाराः पुत्रास्तथागारं सुहृद्धान्यधनादिकम् ।
शरीरारोग्यमैश्वर्यमरिपक्षक्षयः सुखम् ॥
देवि त्वद्दृष्टिदृष्टानां पुरुषाणां न दुर्लभम् ।

इत्यादिना यद् भगवत्यामुक्तं तत्सर्वं भविष्ये—

तावद् भ्रमन्ति संसारे दुःखशोकभयातुराः ।
न भवन्ति सुरज्येष्ठे भक्ता यावत्पितामहे ॥
समासक्तं यथा चित्तं जन्तोर्विषयगोचरे ।
यद्येवं ब्रह्मणि न्यस्तं को न मुच्येत बन्धनात् ॥
नास्ति ब्रह्मसमो लोको नास्ति ब्रह्मसमो गुरुः ।
नास्ति ब्रह्मसमं ज्ञानं नास्ति ब्रह्मसमं तपः ॥

इत्यन्तेन ग्रन्थसन्दर्भेण विधेरुक्तम् ।

वैष्णवेऽपि—

तन्निबोध यथासर्गे भगवान् संप्रवर्तते ।
नारायणाख्यो भगवान् ब्रह्मा लोकपितामहः ॥

उत्पन्नः प्रोच्यते विद्वान् नित्य एवोपचारतः ।
एकार्णवे तु त्रैलोक्ये ब्रह्मा नारायणात्मकः ॥

भोगिशय्यागतः शेते त्रैलोक्यग्रासबृंहितः ।
जनस्थैर्योगिभिर्देवैश्चिन्त्यमानोऽब्जसंभवः ॥

प्रजाः ससर्ज भगवान् ब्रह्मा नारायणात्मकः ।
प्रजापतिपतिर्देवो यथा न तन्मे निशामय ॥

गतकल्पावसाने स निशासुप्तोत्थितः प्रभुः ।
सत्त्वोद्रिक्तस्तथा ब्रह्मा शून्यं लोकमवैक्षत ॥

इत्यादिना विधेर्जगदुत्पत्तिप्रलयहेतुत्वं योगिचिन्त्यत्वादिकमुक्तम् ।

एवं शैववैष्णवादिमतेषूदाहृतान्यनुदाहृतानि चेदृशानि सर्वाणि वाक्यानि स्मर्तव्यानि । एतानि च सर्वाणि वाक्यानि अन्यानि चैतादृशानि कोटिशः श्रुतीतिहास पुराणादिवचनानि यदि प्रागुदाहृतसामान्यवाक्यैरेकवाक्यतां प्राप्य तत्प्रतिपाद्यानां हरिहरादीनामेकाद्वितीयाखण्डानन्तब्रह्मरूपतां प्रतिपादयन्ति तदैव प्रमाणानि भवन्ति । अन्यथा तु परस्परं विरोधं प्राप्य विनिगमनाविरहेण सर्वाण्यपि सुन्दोपसुन्दन्यायेन बाधितानि स्युः ।

न हि सर्वेषामन्योन्यं भिन्नानां तत्तच्छास्त्रोक्तं सर्गादिहेतुत्वसर्वात्मकत्वाद्वितीयत्वादि संभवति विकल्पसमुच्चयादीनां निरस्तत्वात् ।

तस्माच्छ्रुतिस्मृतिप्रामाण्यमिच्छद्भिस्तदभेद एवाभ्युपेयः । यस्तु श्रुतिस्मृती उल्लङ्घ्य दुराग्रहदुस्तर्कैस्तद्भेदं प्रतिपादयति स न शैवो न वा वैष्णवः किन्तु नास्तिक एव मन्तव्यः ।

यथाह भगवान्—

श्रुतिस्मृती ममैवाज्ञे यस्ते उल्लङ्घ्य वर्तते ।
आज्ञाछेदी ममद्वेषी मद्भक्तोऽपि न वैष्णवः ॥ इति ।

मनुश्चाह—

श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः ।
ते भूते योऽवमन्यत हेतुशास्त्राश्रयाद् द्विजः ॥

स साधुभिर्बहिष्कार्यः नास्तिको वेदनिन्दकः। इति

ततश्च श्रेयः कामैस्तदभेदोऽङ्गीकार्यः।

यस्तु दुराग्रहमत्यजन् शिवविष्ण्वादिभेदमेवोपगच्छति शैवो वा वैष्णवो वा स सुधीभिः प्रष्टव्यः। किं विष्णोर्भिन्नः शिवः शिवाद्भिन्नो वा विष्णुः? इति। तत्र नाद्यः—घटाद् भिन्नस्य पटादेरघटत्ववद् विष्णुभिन्नस्याविष्णुत्वापत्त्याऽऽनन्दात्मक शिवस्वरूपत्वमपि न स्यात् "यो वै भूमा तत्सुखं नाल्पे सुखमस्ति" इति श्रुतेः पुरुषोत्तमाद्भिन्नस्यापुरुषोत्तमत्वं मुकुन्दभिन्नस्यामुकुन्दत्वं च ध्रुवं तथा चालं तदुपासनया मुमुक्षूणाम्।

नापि द्वितीयः—शिवात् शम्भोः शङ्करान्महेश्वराद्भिन्नस्याशिवत्वाशम्भुत्वाशङ्करत्वामहेश्वरत्वापत्त्याऽनुपास्यत्वप्रसङ्गात्।

"शिव एको ध्येयः शिवङ्करः अन्यत्सर्वं परित्यज्य" इति श्रुतेः।

अत एवोक्तं हरिवंशे—

न विना शङ्करं विष्णुर्न विना केशवं शिवः। इत्यादि।

तस्मात्तत्तल्लीलाविग्रहावाच्छिन्ने परे ब्रह्मणि नोपाधिकोऽपि भेदः कल्प्यः। तथा च व्याससूत्रम्—

"न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि" इति। अपि चैवमेके इति च स्थानतः उपाधितोऽपि परस्य परमात्मनः उभयलिङ्गमनेकरूपत्वं नास्ति, सर्वत्र ब्रह्मपरेषु वेदान्तेषु तदेकत्वस्य श्रवणादिति प्रथमसूत्रार्थः।

एके शाखिनः एवं भेदनिन्दापूर्वकमभेदमेव परमात्मनः समामनन्ति। "नेह नानास्ति किञ्चन" "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" इति द्वितीयार्थः।

तर्हि तत्तत्पुराणेषु इतरासाधारण्येन तत्तत्प्रतिपादनमप्रमाणं स्यात्, वैष्णवं शैवमित्यादि पुराणसंज्ञाभेदाश्चानर्थकाः स्युः।

चतुर्भिर्भगवान् विष्णुर्द्वाभ्यां ब्रह्मा तथा रविः।
अष्टादशपुराणेषु शिष्टैस्तु भगवान् शिवः।

इत्यादि प्रभासखण्डादिगतं विभागवचनं चाप्रमाणं स्यात्। तथा चाभेदश्रुत्यादिप्रामाण्यसाधने प्रवृत्तानां भवताम् "एकं संधित्सोरपरं प्रच्यवते" इति न्यायविषयत्वं दुर्वारम्। तथा चैतद्दोषपरिजिहीर्षयौपाधिको भेदोऽभ्युपेय इति चेन्न, तत्तल्लीला विग्रहावाच्छिन्ने परमेश्वरे तत्तद्गुणकार्यसर्गादिप्राधान्यविवक्षया रजआदिगुणा-

वच्छिन्ने चैतन्य इव तत्तच्छब्दप्रवृत्तिसंभवात्। गुणहेतुकक्रियाप्राधान्यविवक्षयाऽपि च संज्ञाभेदः एवं परमात्मनः कृषीबलस्येव पूर्वोक्तसंज्ञाभेदः।

तदुक्तं विष्णुपुराणे—

सृष्टिस्थित्यन्तकरणाद् ब्रह्मविष्णुशिवात्मिकाम्।
स संज्ञां याति भगवानेक एव जनार्दनः॥ इति।

मार्कण्डेयेऽपि कृषीबलदृष्टान्तपूर्वकमेवोक्तम्—

यथा प्राग्वापकः क्षेत्री पालको लावकस्तथा।
तथा स संज्ञामायाति ब्रह्मविष्णुशिवात्मिकाम्॥ इत्यादि।

केचित्तु—

सत्त्वादिगुणावच्छिन्नचित्त इव चतुर्भुजादिशरीरवृत्तिजातिविशेषविशिष्टस्यापि ब्रह्मणो विष्ण्वादिशब्दवाच्यत्वम्। तथा च श्रुत्यादौ तत्तच्छब्देन तत्तन्मात्रव्यवहारोपपत्तिरित्याहुः।

एवञ्च रुद्र शब्दितस्य तमोऽवच्छिन्नचैतन्यस्य चतुर्भुजशरीराभिमानित्वात्, तदभिमानविषयस्य च त्रिनेत्रशरीरस्य विष्णुशब्दितसत्त्वावच्छिन्नचिदभिमानविषयत्वात्, चतुर्मुखशरीरस्यापि तयोरभिमानविषयत्रिनेत्रशरीरस्य विष्णुगोचरत्वात्, रजोऽवच्छिन्नस्य उभयाभिमानित्वाच्च—

यो विष्णुः स तु वै रुद्रः यो रुद्रः स पितामहः। इत्यादेराञ्जस्यम्। चतुर्भुजशरीरस्येव तदभिमानिनोर्हरिरहयोरपि हरिनारायणादिशब्दाभिधेयत्वात् "नामानि तव गोविन्द" इत्यादेराञ्जस्यम्। उक्तविवक्षया संज्ञाभेदादसाधारणव्यवहारादेराञ्जस्यञ्चेति सर्वं चतुरस्रम्।

कारणीभूततमःप्रभृत्यवच्छिन्न चैतन्यस्य रुद्रादिसंज्ञाः मैत्रायणीशाखादौ श्रूयन्ते—

"अथ यो ह खलु वा वास्य तामसोंऽशोऽसौ स ब्रह्मचारिणो योऽयं रुद्रः, अथ यो ह खलु वा वास्य राजसोंऽशोऽसौ स ब्रह्मचारिणो योऽयं ब्रह्मा, अथ यो ह खलु वा वाऽस्य सात्त्विकोंऽशोऽसौ स ब्रह्मचारिणो योऽयं विष्णुः, स वा एष एकस्त्रिधा भूतः" इत्यादि।

अयमर्थः—

तामसः तमः प्राधान्येन विवाक्षितस्तत्कार्योपसंहारक्रियाप्राधान्येन वा विवक्षितोंऽशो हे ब्रह्मचारिणः एवमग्रेऽपि। न च तामसादिपदेन केवलतम आद्यवच्छिन्नो विवक्षितः। तम आदेरन्योन्यसहचरणस्वभावत्वात्।

अथाहुः सांख्यतत्त्वविदः—

"अन्योन्यमिथुनवृत्तयः" इति ।

आगमश्चात्र भवति—

अन्योन्यमिथुनाः सर्वे सर्वे सर्वत्रगामिनः ।
रजसो मिथुनं सत्त्वं सत्त्वस्य मिथुनं रजः ॥
तमसश्चापि मिथुने ते सत्त्वरजसी उभे ।
उभयोः सत्त्वरजसोर्मिथुनं तम उच्यते ॥
नैषामादिः संप्रयोगो वियोगो नोपलभ्यते । इति ।

मिथुनपदेन सर्वत्राविनाभाववर्तित्वलक्षणं सहचरणशीलत्वं विवक्षितम् । अत एव तदुपाधिकानां ब्रह्मादीनामप्यविनाभावः स्मर्यते लैङ्गवायवीययोः—

परस्पराश्रिता ह्येते परस्परमनुव्रताः ।
परस्परेण वर्तन्ते ध्यायन्ति च परस्परम् ॥
अन्योन्यमिथुना ह्येते ह्यन्योन्यमुपजीविनः ।
क्षणं वियोगो न ह्येषां न त्यजन्ति परस्परम् ॥ इति ।

तथा च यथोक्तव्याख्यानमेव तामसादिपदैर्यूचितमित्यलमतिप्रसङ्गेन ।

तथा—

मैत्रेय श्रूयतामेतद् यत्पृष्टोऽहमिदं त्वया ।
विष्णोरंशांशसंभूतिचरितं जगतो हितम् ॥

इत्यादिना विष्णुपुराणादौ श्रीकृष्णादावपि वर्णितः अंशत्वव्यवहारः औपचारिक एव । विष्णोः परब्रह्मणोंऽश इवांशो दुग्धाब्धिशायी तस्यांश इवांशः श्रीकृष्णः । नह्ययं पाषाणांशोऽयं कण इतिवदंशत्वव्यवहारः संभवति, निष्कलत्वश्रवणविरोधात् ।

अत एवेन्दोरंशो गुरुरितिवदपि नांशत्वव्यवहारः संगच्छते, तद्वदेवात्यन्तभेदप्रसङ्गात् । नापि बिम्बप्रतिबिम्बभावेन सः, अवताराणां जीवत्वप्रसङ्गात् ।

नचैश्वर्यानृतत्वाविद्यावद्विषयकर्मकर्तृत्वादिरूपजीवलिङ्गदर्शनात्, "यतो वा इमानि भूतानि जायन्ते" "जन्माद्यस्य यतः" इत्यादि श्रुतिसूत्रसिद्धमहाभूताद्युत्पादकत्वादीशलक्षणश्रवणाच्चेष्टमेव जीवत्वमवताराणामिति चेन्नूनं दुर्मतिरसि । यतः—

अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन्।
प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया॥
यदा यदा हि धर्मस्य ग्लानिर्भवति भारत।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम्॥
मनुष्यदेवगन्धर्वचेष्टां चेष्टे स्वयं प्रभुः।
स्वलीलया जगत्त्रातुं निजरूपं विगूहयन्॥

इत्यादिवचनानि पश्यन्नपि न पश्यसि इव। अविद्यावद्विषयकर्मकर्तृत्वन्तु लोकानुग्रहार्थमेवेशस्य। "यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः" इत्यादि तद्वचनात्।

श्रीभागवते नवमे—

"स्त्रीसङ्गिनां गतिरयं प्रथयंश्चकार" इत्यादिना श्रीरामादेरपि "लोकवत्तु लीलाकैवल्यम्" इति न्यायेनैवाविद्यावद्विषयकर्मादिकर्तृत्वोक्तेश्च।

सदाशिवावतारत्वेन प्रसिद्धस्य श्रीभैरवस्य ब्रह्महत्या प्रायश्चित्ताचरणं लोकसंग्रहार्थमिति तु प्रागेव सप्रपञ्चं निरूपितम्। "महादेवांशसम्भूतम्" इत्यादिना तत्रांशत्वोक्तिरप्युक्तयुक्त्यौपचारिक्येव।

एवं श्रीगणेशस्य ब्रह्मवैवर्ते विष्ण्वंशत्वव्यवहारः, अन्यत्र क्वचिद् हरांशत्वव्यवहारः क्वचिद् ब्रह्मांशत्वव्यवहारश्च यः सोऽपि तादृक्षः। श्रीस्कन्दस्यापि क्वचिद् विष्ण्वंशत्वोक्तिः क्वचिच्छिवांशत्वोक्तिश्चैवमेव, अत्र पूर्वोक्तानि तत्तत्पूर्णेश्वरत्वप्रतिपादकानि वाक्यानि स्मर्तव्यानि। मल्लारिस्तु साक्षाच्छिव एव न तत्रांशत्वकथापीति प्रसिद्धं ब्रह्माण्डपुराणे।

कथं तर्हि रामकृष्णादिषु गर्भवासादिपुरस्सरं जन्मक्रमेण च बाल्यकौमारयौवनाद्यवस्थाभेदाः युद्धे मूर्च्छापलायनादिकं च पितृभ्रातृभार्याद्यर्थं रोदनादिकं चेति चेत्, मायामात्रमेव सर्वं यतो दृश्यत एवेन्द्रजालमिव न तु वस्तुतोऽस्ति। अखण्डचिदानन्दघनस्वरूपत्वाद् रामादेः।

तदुक्तं ब्रह्माण्डपुराणे—

स्त्रीपुंमलानुषङ्गात्मा देहो नास्य विजायते।
किन्तु निर्दोषचैतन्यां सुखं नित्यां स्वकां तनुम्॥
प्रकाशयति सैवेयं जनिर्विष्णोर्न चापरा।
तथाप्यसुरमोहार्थं परेषां च क्वचित् क्वचित्॥
दुःखाज्ञानश्रमादींश्च दर्शयेत् शुद्धसद्गुणः।
क्व ब्रह्मादिः क्व चाज्ञानं स्वतन्त्राचिन्त्य सद्गुणे॥
मोक्षप्रभावाय तेषां तु दर्शयेत्तानजो हरिः।
कृष्णोह्यत्यक्तदेहोऽपि त्यक्तदेहस्य देहवत्॥
लोकानां दर्शयामास स्वरूपं सदृशाकृतिम्॥ इति।

विष्णुरित्युपलक्षणम् । नन्दगृहादौ दुर्गादेरवतारा अप्येवमेव । तथा च रामावतारे शोकज्ञापनफलं रावणस्येश्वरत्वबुद्धिप्रतिबन्धेन मुक्त्यभावो मृत्युसिद्धिश्च । मनुष्यातिरिक्तेन मरणाभावस्य तेन वृतत्वात् ।

अस्य च लैङ्गे अम्बरीषोपाख्याने—

नामार्थमम्बरीषस्य तथैव मुनिसिंहयो ।
रामोदाशरथिर्भूत्वाऽनात्मवेदीव सोऽभवत् ॥

इत्यादिनानाद्यत्वं स्पष्टमुक्तम् । कृष्णावतारे देहत्यागज्ञापनस्य मर्त्यानां वैराग्यं फलम् ।

यत्तु विष्णुपुराणे—

एवं संस्तूयमानस्तु भगवान् परमेश्वरः ।
उज्जहारात्मनः केशौ सितकृष्णौ महामुने ॥
उवाच च सुरानेतौ मत्केशौ वसुधातले ।
अवतीर्यभुवोभारक्लेशहानिं करिष्यतः ॥ इत्युक्तम् ।

तस्यायं भावः—

सुराः समस्ताः सुरनाथ कार्य-
मेभिर्मयायच्च तदीश सर्वम् ।
आज्ञापयाज्ञां परिपालयन्त-
स्तथैव तिष्ठाम सदाऽस्तदोषाः ॥ इति ।

सुरैरुक्तो भगवानाह—मम दुष्करं चेद् युष्माभिः साहाय्यं कार्यं स्यान्नत्वेवमस्ति भूभारनिवारणादौ कर्त्रन्तरापेक्षया महत्यपि कार्ये मत्केशयोरपि समर्थत्वादिति ।

न तु केशमात्रावतार इति भ्रमितव्यम्,

"ततः क्षयमशेषास्ते दैतेया धरणीतले ।
प्रथास्यन्ति न सन्देहो मद्दृकपातविचूर्णिताः ॥

कृष्णाष्टम्याहमुत्पत्स्यामि" इत्यादिषु तत्रैव साक्षात्स्वावतारोक्तिविरोधात् "कृष्णस्तु भगवान् स्वयम्" इत्यादिपुराणान्तरविरोधाच्च ।

अजरामरस्येशस्यार्धपलितत्वासंभवादेकः केशो भगवदिच्छया तदैव श्वेतो बभूव श्रीरामस्य श्वेतवर्णज्ञापनार्थमिति गम्यते । एतेन—

स चापि हरिरुच्च जह्ने शुक्लमेकमपरं चापि कृष्णम् ।
तौ चापि केशावविशतां यदूनां कुले स्त्रियं रोहिणीं देवकीञ्च ॥
तयोरेको बलभद्रो बभूव, योऽसौ श्वेतस्तस्य देवस्य केशः ।
कृष्णो द्वितीयः केशवः संबभूव केशो योऽसौ सर्वतः कृष्ण उक्तः ॥ इति ।

भारतोक्तिरपि व्याख्याता ।

तस्माद् ब्रह्मादिषु चांशत्वव्यवहार औपचारिक एव। तच्चांशत्वं ब्रह्मादिष्वाविष्कृतोत्पत्त्यादि शक्तित्रयाल्पोत्पत्त्याद्येकैकहेतुशक्तित्वमेव, न तु स्वांशित्वेनाभिमतानन्तशक्तिमायाशबलब्रह्मापेक्षया वस्तुतोऽल्पशक्तित्वं, संख्यातशक्तित्वेनानीश्वरत्वप्रसङ्गेन तेषामनन्तशक्तित्वप्रतिपादकानन्तवचनाप्रमाण्यापत्तेः।

तस्मात् त्रिगुणमायोपहित एक एवेशो "विषवृक्षोऽपि संवर्द्ध्य स्वयं छेत्तुमसाम्प्रतम्" इति न्यायेन तत्तदुपयोगितत्तद् गुणमादाय तत्तद्विग्रहावच्छेदेनोत्पत्त्याद्येकैकं कर्म कुर्वन् ब्रह्मादिसंज्ञामात्रभेदेन व्यवह्रियते इति सिद्धम्।

एवं मत्स्याद्यवतारेष्वपि अवतार्यपेक्षयाऽऽविष्कृताल्पशक्तित्वमेवांशत्वव्यवहारप्रयोजकम्। स्वल्पशक्त्याविष्करणमप्यधिकायाः शक्तेरनुपयोगात्, न तु तदभावात्। यथा हि कश्चित् सर्वशास्त्रविशारदोऽपि पण्डितो बहून् देशान् विचरन् यस्मिन् यस्मिन् देशे काले वा यद् यद् विद्योपयोगं पश्यति तत्र तत्र तां तामेव विद्यां प्रकटयंस्तत्तद्व्यवहारभाग्भवति वैयाकरणोऽयं वेदान्त्ययं तार्किकोऽयमित्यादि। यत्र तु सर्वविद्योपयोगं पश्यन् सर्वाः प्रकटयति तत्र सर्वशास्त्रकुशलोऽयं पण्डित इति व्यवह्रियते तथा च प्रकृते। एवञ्च

अन्ये चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम्। इति भागवतं संगच्छते।

कृष्णावतारे विश्वरूपदर्शनाद्यनेकशक्त्याविष्करणात्। अन्यत्र तथाऽभावात्।

वस्तुतस्तु सर्वेषामपि एकाद्वितीयाखण्डानन्तचिदानन्दघनसमरोपितसर्वशक्तित्वाद्यनन्तकल्याणगुणपरमेश्वररूपत्वमेव सर्वत्र चोक्तलक्षणमौपचारिकांशत्वमपि।

ये त्वाहुः—

यस्मिन्नवतारे भगवतो देहान्तरं नोपलभ्यते स पूर्णः। यत्रोपलभ्यते सोंऽश इति तेषामीशस्वरूपं किमभिमतमिति त एव प्रष्टव्याः। किञ्चैषां तत्तत्कार्येषु प्रवृत्तिलिङ्गेन कारणीभूतरजोऽवच्छिन्नब्रह्मरूपत्वं दैत्याद्युपसंहारलिङ्गेन कारणीभूततमोगुणावच्छिन्नरुद्ररूपत्वं तदुपसंहारस्य सुरादिपालने पर्यवसायित्वेन कारणीभूतसत्त्वगुणावच्छिन्नविष्णुरूपत्वञ्च ज्ञेयम्।

एतेन गुहगणेशयोर्हरिहराद्यवतारत्वप्रतिपादकवाक्यविरोधः परास्तः। सर्वेषां सर्वावतारत्वोपगमेन प्रत्युत तेषां वचनानां सर्वथाऽनुकूलत्वात्। मत्स्यादेर्विष्णुरूपत्वमतिप्रसिद्धं श्रुतीतिहासपुराणादिषु, विधिरूपत्वं च विष्णुपुराणेऽभिहितम्:—

सत्त्वोद्रिक्तस्तथा ब्रह्मा शून्यं लोकमवैक्षत।
तोयान्तः स महीं ज्ञात्वा जगत्येकार्णवे प्रभुः॥
अनुमानात्तदुद्धारं कर्तुकामः प्रजापतिः।
अकरोत्स तनूमन्यां कल्पादिषु यथा पुरा॥
मत्स्यकूर्मादिकां तद्वद् वाराहं वपुरास्थितः। इत्यादि।

शिवसहस्रनामादिषु मत्स्यकूर्मवाराहनृसिंहादीनि शिवनामान्युपलभ्यमानानि तेषां तद्रूपतां गमयन्ति। प्रवृत्त्युपसंहारयोरपि पालने पर्यवसानेन तस्य प्राधान्यात् विल्ववतारत्वव्यवहारप्राचुर्यमिति वोध्यम्।

यत्तु भागवते—

जगृहे पौरुषं रूपं भगवान् महदादिभिः।
संभूतं षोडशकलमादौ लोकसिसृक्षया॥ इत्यादिना।

वैराजं रूपं प्रस्तुत्याभिहितम्—

एतन्नानावताराणां निधानं बीजमव्ययम्।
यस्यांशांशेन सृज्यन्ते देवतिर्यङ्नरादयः॥ इति।

तदपि "तात्स्थ्यात्ताच्छाब्द्यम्" इति न्यायेन तत्रत्यविराट्प्रतिपादकशब्दजातस्य तत्स्थान्तर्यामिपरत्वादविरुद्धम्।

एते च लीलाविग्रहा अनन्ताः।

नन्वीशस्य ब्रह्मादिसंज्ञा अपि मत्स्यादिसंज्ञा इव चतुर्मुखादिलीलाविग्रहमात्रकृता एव किं न स्युरिति चेन्न, लीलाविग्रहाणामेकैकस्याप्यनेकत्वस्मरणेन प्रतिब्रह्माण्डं प्रतिमहाकल्पं भेदेन चानन्त्याद् ब्रह्मादीनामप्यानन्तापत्तेः। एतेनैक एवेश्वरस्तत्तल्लीलाविग्रहावच्छिन्नो विष्णुशिवादिव्यपदेशभाग्भवतीति तार्किकमतं निरस्तम्। मत्स्यादीनामिव तेषामप्यानन्त्यप्रसङ्गात्। न चेष्टापत्तिः, "एको विष्णुरेको रुद्रः" इत्यादि श्रुतिविरोधात्।

तस्मात्सत्त्वादिगुणावच्छेदककृत एव विष्ण्वादिसंज्ञामात्रभेदः। स च तत्तद्गुणकार्यतत्तत्क्रियाप्राधान्यविवक्षया तत्तद्विग्रहावच्छिन्नेऽपि ईशे प्रवर्तते इत्येव वस्तुगतिः।

यत्तु केचिन्मन्यन्ते—

विग्रहप्रतिपादकश्रुत्यादीनामुपासनापरत्वादारोपितविग्रहेणाप्युपासनोपपत्तेर्नेशस्य वर्णितविग्रहसिद्धिरिति, तन्न, उपासनापरेभ्योऽप्यविरोधे देवताधिकरणन्यायेन प्रतीयमानार्थसिद्धेरनिवार्यत्वात्।

न च "अपाणिपादः" इति श्रुतिविरोधोऽस्तीति वाच्यम्, निर्गुणश्रुतिविरोधात्सत्यकामादिगुणानामप्यनभ्युपगमापत्तेः। इष्टापत्तिरिति वदतां तु यथा ध्यानार्थे सत्यकामादिगुणोपदेशे तद्गुणईश्वरप्रसिद्धयतीतिव्यतिहाराधिकरणभाष्यविरोधस्तथा "माया कल्पिता गुणा वास्तवं निगुणत्वं न विघ्नन्ति" इति न्यायस्त्विहापि तुल्यः।

यत्तु "रूपोपन्यासाच्च" इति सूत्रे विग्रहोपन्यासपरत्वेन सूत्रव्याख्यानानन्तरं ब्रह्मणो विग्रहाभावाद् तद् व्याख्यानमयुक्तं मन्यमानानां परेषामन्यथा व्याख्यानमुपन्यस्तं भाष्यकारैस्तन्मुण्डकश्रुतौ निर्विशेषब्रह्मपरोपक्रमविरोधान्न विग्रहोपन्यासः संगच्छते

इत्यभिप्रायेण उक्तश्च तैरेवान्यत्र विग्रहसद्भावः स्यात्परमेश्वरस्यापि इच्छावशान्मायामयं रूपं साधकानुग्रहार्थमिति ।

सूत्रकारेण च भोगमात्रसाम्यलिङ्गाच्चेत्यहं ग्रहोपासकानां ब्रह्मणश्च भोगसाम्यं वदता स्पष्टीकृतम् । शरीरसापेक्षे वैषयिकानन्दे भोगशब्दप्रसिद्धेः ।

न च वाग्धेन्वादिवदुपासनार्थमारोपिता एव विग्रहाइति शक्यं वक्तुम्, छान्दोग्ये समानप्रकरणे गुणोपसंहारन्यायेनोपास्य ब्रह्मणः उदाहृतमन्त्रवर्णादिसिद्धविग्रहसिद्धवत्कारेण "एष आत्माऽपहतपाप्मा" इत्यादिना शरीरत्वसाम्येन प्रसक्तानां जरामरणजिघन्सापिपासादीनां प्रतिषेधदर्शनात् । अन्यथा तेषामप्रसक्तनिषेधापत्तेः ।

न च विग्रहवदजरत्वादयोऽपि केवलमुपासनार्थमारोपिता एवोपास्यन्त इत्यस्त्विति शङ्क्यम्, तत्रैव "अस्मिन् कामाः समाहिताः" इत्यादिना तेषामनारोपितव्यावहारिकेश्वरगुणत्वस्फुटीकरणात् ।

नन्वजरत्वादि न विग्रहगुणत्वेनोपास्यम्, "एष आत्माऽपहतपाप्मा" इत्यादिनात्मगुणत्वोक्तेः ।

तद्गुणैः सत्यकामादिभिः सह पाठाच्च "यत्साधं श्रूयते यच्च तत्तादृगवगन्यते" इति न्यायेनात्मगुणत्वसिद्धेरिति चेन्न, "सर्ववेदान्तप्रत्यय" न्यायेन तत्र विग्रहविष्टस्यैव ब्रह्मणः उपास्यत्वे स्थिते औचित्याच्छैववैष्णवादिपुराणेषु कोटिशो दृश्यमानोपबृंहणानुरोधाच्च जरत्वादेर्विगहगुणत्वसिद्धेः ।

अस्मदादिबुद्धिकल्पितैर्न्यायैर्हि व्यवस्थापनादुपबृंहणानुसारेण व्यवस्थापनं ज्यायः । पुरुषबुद्धीनामव्यवस्थितमर्यादत्वेन तदुन्नीतैर्न्यायैस्तथार्थव्यवस्थित्यसिद्धेः ।

बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति ।
इतिहासपुराणाभ्यां वेदार्थमुपबृंहयेत् ॥
वेदार्थो यः स्वयंज्ञातस्तत्राज्ञानं भवेदपि ।
ऋषिभिर्निश्चिते तस्मिन् का शङ्कास्यान्महात्मनाम् ॥

इति व्यासवचनाच्च ।

तथा च—

तस्योपरि शिवं ध्यायेत्साम्बं सर्वमनोहरम् ।
सर्वलक्षणसम्पन्नं गाढयौवनशोभनम् ॥

इत्याद्युपबृंहणानुरोधेन विग्रहगुणत्वेनैवान्वयो युक्तः ।

तथात्वेऽपि तद्द्वारा आत्मगुणत्वसंभवात्तद्व्यपदेशस्य तद्गुणैः सहपाठस्य च—

त्रिलोचनो नीलकण्ठः प्रशान्तः शान्तिवर्धनः ।
बुद्धिमान् नीतिमान् वाग्मी श्रीमान् शत्रुनिवर्हणः ॥

विपुलांसो महाबाहुः। इत्यादावविवोपपत्तेश्च। तस्मिन् यदन्तस्तदन्वेष्टव्य-मित्यादिना विधानानूद्यमानस्य स्तुत्यर्थत्वयोगाच्च। पुराणैर्निर्णीतेऽर्थे संशयद्य-योगाच्च।

न च पुराणानामप्यर्थवादत्वं कल्प्यम्, तत्रार्थवादत्वकल्पनाया अतिनिन्दित-त्वात्।

तथा च शैवे—

वेदाः प्रतिष्ठिता देवि पुराणं नात्र संशयः।
पुराणमन्यथा कृत्वा तिर्यग्योनिमवाप्नुयात्॥
सुशान्तोऽपि सुदान्तोऽपि न गतिं प्राप्नुयात् क्वचित्।

इत्यादि।

पुराणेष्वर्थवादत्वं ये वदन्ति नराधमाः।
तैरर्जितानि पुण्यानि तद्वदेव भवन्ति हि॥ इत्यादिना।
पुराणेषु द्विजश्रेष्ठाः सर्वधर्मप्रवक्तृषु।
प्रवदन्त्यर्थवादत्वं ये ते नरकभागिनः। इत्यन्तेन

बृहन्नारदीये च।

तस्माद् विग्रहगुणास्याजरत्वादेः स्वरूपतो विद्यमानत्वेन निर्दिश्योपास्यतया विधानेनानारोपितत्वाध्यवसायाद् धर्मिणो विग्रहस्याप्यनारोपितता निश्चीयते अतोऽभ्युपगन्तव्या। एवमपि नो महेश्वरस्य पूर्वोक्ताः श्रुत्यादिसिद्धाः स्त्रीपुमाकारा लीला-विग्रहांस्त्यक्तव्याः पवनानुयायिना।

एते च विग्रहा मायामात्रस्वरूपाः। "आकाशशरीरं ब्रह्म" इति श्रुतेः।
एषा माया मया सृष्टा यन्मां पश्यसि नारद।
सर्वभूतगुणैर्युक्तं न तु मां द्रष्टुमर्हसि॥ इति स्मृतेश्चेति केचित्।

अन्ये तु—

सर्गादिषु स्वयं भान्ति ब्रह्माद्या ये स्वयम्भुवः।
विज्ञप्तिमात्रदेहास्ते सर्वात्मानः सदा स्थिताः॥

इत्यादि वसिष्ठादिवचनान्याश्रित्य चिन्मात्रस्वरुपा एव ते, माया तु शुद्ध-चैतन्यस्य विग्रहाकारेण भाने निमित्तमात्रमित्याहुः। एतस्मिन् मते "एषा मया" इति स्मृतेरयमर्थः—यन्मां सहस्रपादादियुक्तं पश्यसि एषा हीति निश्चयेन माया, मद्भक्ता मामेव पश्यन्त्विति तद्वृत्त्यात्मकेच्छा मयाऽऽविष्कृता। ईदृशं दृश्यमानमपि वस्तुतः केवलं संविन्मात्रमेव द्रष्टुमर्हसि न तु सकलभूतगुणैर्गन्धादिभिर्युक्तं स्वमिव भौतिकशरीरं द्रष्टुं योग्योऽसीति।

अयं भावः—

यथा शुक्तिः शुक्त्यात्मतामपरित्यज्या विद्यया रजताकारेण प्रतीयते तथैवाहम-रूपरसादिविम्बाखण्डानन्तचिदानन्दघनस्वरूपत्वमपरित्यज्यैवाघटनाघटनपटीयस्या स्वाधीनमायया पाणिपादादिवान् परिच्छिन्न इव प्रतीये।

यद्यपि जीवशरीराण्यप्येतादृशानि तथापि तत्र सोपाधिको भ्रमो हेतुः अत्र तु केवलमायावृत्त्यात्मको मम सत्यसंकल्प एव हेतुः इति।

ननु सत्यसंकल्पश्चेदीशस्तदा स्वसंकल्पमात्रेण किमिति जगदुत्पत्त्यादिकं न करोति किं विग्रहैः प्रयोजम्। तथा दैत्योपसंहारादेरपि संकल्पेन साधयितुमतिसुकरत्व् किमर्थं सुरनरतिर्यगादिभावेन विविधायुधैश्च क्लिश्यतीति चेत्सत्यम्, संकल्पेनैव सर्वं कर्तुं समर्थोऽपीशो भक्तानामभिध्यानाय तानि तानि श्रवणमनोहराणि चरितानि तत्तद्रूपेण विधत्ते। सुरनरतिर्यगादिरूपधारणमपीशस्य तादृशमेव। नत्ववतार्यंववतार-विग्रहेष्वणुरपि विशेषोऽस्ति येन क्लेशः स्यात्।

तदुक्तं पुष्पदन्ताचार्यैः शिवरहस्ये—

"जगद्रक्षायै त्वं नटसि ननु वामैव विभुता" इति नटसि नटवदाचरसि भैरवाद्यै-र्मत्स्याद्यैश्चावतारैर्विहरसीत्यर्थः। एतेन दृष्टान्तेन निरवयवनीरूपसंवित्तिस्वरूप एवेशो मे भक्ता मामेवं पश्यन्तु इतीच्छयैव सावयव इव रूपवानिवाक्षिगोचर इव च भातीति सूचितम्।

श्रीस्कन्दश्च श्रीकृष्णं प्रस्तुत्याह स्कान्दे—

कैवल्यं यत्परं ब्रह्म निराकारमगोचरम्।
तच्च मूर्त्या परिणतं केवलं भक्तिहेतुतः॥ इति।

अभियुक्तैश्चोक्तम्—

परमियमुपदेशमाद्रियध्वं
निगमवनेषु नितान्तखेदखिन्नाः।
विचिनुतभवनेषु वल्लवीना-
मुपनिषदर्थमुलूखले निबद्धम्॥ इति।

युद्धादिकमपीशस्य दैत्याद्यनुग्रहार्थमेव।

तदुक्तं मार्कण्डेये—

दृष्ट्वैव किं न भवती प्रकरोति भस्म,
सर्वासुरानरिषु यत्प्रहिणोसि शस्त्रम्।
लोकान् प्रयान्तु रिपवोऽपि शस्त्रपूता-
इत्थं मतिर्भवति तेष्वहितेषु साध्वी॥ इति।

न च युद्धादिकं तस्य क्लेशावहं किन्तु क्रीडामात्रम् । मोहादिकं तु नाट्यमेवेति प्रागेव निवेदितम् ।

हरिवंशे च निकुम्भपरिघप्रहारेण मोहं प्राप्त इव कृष्णे अभिहितम्—

नूनमात्मेच्छया कृष्णस्तथा चक्रे सुरोत्तमः ।
को हि शक्तो महात्मानं युद्धे मोहयितुं हरिम् ॥ इति ।

न चात्र—

"त्वन्मुखाभेच्छया नूनं पद्मैर्वैरायते शशी" इत्यत्रेव नूनमिति पदमुत्प्रेक्षायामिति भ्रमितव्यम्,

संग्राममृत्युमधिगम्य दिवं प्रयान्तु
मत्वेति नूनमहितान् विनिहंसि देवि । इत्यत्रेव अस्य निर्धारणार्थकत्वात् । न च दृष्टान्तासिद्धिः, एतदर्थस्य तत्राभ्यस्तत्वेन तात्पर्यविषयत्वनिर्धारणात् ।

यैस्तु भक्त्या स्मृता नूनं तेषामृद्धिः प्रजायते ।
इत्यादौ निश्चयार्थत्वनिश्चयाच्च । किञ्चेशमाथाया अचिन्त्यत्वान्न तर्कविषयत्वम् । अतस्तन्मयानि चरितान्यप्यतर्कनीयानि "नैषा तर्केण मतिरानेया" इति श्रुतेः "अचिन्त्या खलु ये भावा न तांस्तर्केण योजयेत्" इत्यभियुक्तोक्तेश्च ।

भागवते चोक्तम्—
को वेत्ति भूमन् भगवन् परात्मन्,
योगेश्वरोतीर्भवतस्त्रिलोक्याम् ।
क्वाहो कथं वा कति वा कदेति
विस्तारयन् क्रीडसि योगमायाम् ॥ इत्यादि ।

तस्मादतर्क्येऽर्थे शास्त्रेणैव विनिर्णयः । शास्त्राच्च एकमेवाद्वितीयं ब्रह्म स्वमायया हरिहराद्याकारेण रमो माद्याकारेण मत्स्याद्याकारेण गुहगणेशाद्याकारेण च प्रतीयते इति निश्चीयते, अकर्तेव कर्तेवेति च । तथा चायमेवार्थः श्रद्धेय आस्तिकैः ।

ननु यदि हरिहरादीनामेकाद्वितीयब्रह्मरूपत्वं स्यात्तर्हि तत्तन्माहात्म्यवर्णनपरेषु पुराणादिषु इतरापकर्षवर्णनं न स्यात्, दृश्यते च तत्, यथाऽत्रैव प्राक्प्रदर्शित शैववैष्णवादिमतस्थपुराणादिवाक्येषु अन्यत्रापि च पुराणादिषु दृश्यमानेषु तथाविधवाक्येषु । एवम् "अन्ये चांशकलाः पुंसः" इत्यादावतारेष्वपि उत्कर्षापकर्षभावो वर्ण्यमानो दृश्यते । तथा च तदन्यथानुपपत्त्या साम्यमपि दुर्लभम्, ऐक्यस्य तु का कथा । ततश्च "पतन्तमनुधावन् बद्धोऽपि गतः" इति न्यायापात इति चेदत्र कश्चिदाह—

भेदवादिनः "श्यालशुनक" न्यायेन कोपोत्पादनार्थं तदिष्टदेवस्येतरपरपुराणेषु अपकर्षवर्णनमिति ।

परे तु—

प्रागुक्तवासिष्ठवायुसंहिताकौर्मादिवचनान्याश्रित्य कल्पभेदेन स्वेच्छया परस्पराज्जन्मनिमित्तकं पुराणादिषूत्कर्षापकर्षवर्णनमित्याहुः।

अन्ये तु—

"न हि निन्दा निन्दितुं प्रवर्ततेऽपितु विधेयं स्तोतुम्" इति न्यायेन तत्तल्लीलाविग्रहावच्छिन्नेशध्यानभजनादिस्तुतये तदन्यविग्रहावच्छिन्नेशापकर्षवर्णनम्। तच्च "यत्परः शब्दः स शब्दार्थः" इति न्यायेन प्रकृतविग्रहावच्छिन्नेशाराधनस्तुतिपरमेव नत्वितरनिन्दापरमपि, तत्र प्रयोजनाभावात्। उभयपरत्वे वाक्यभेदापत्तेश्च। दृश्यते हि उदितानुदितहोमयोस्तथा। तस्मान्न तेन पुंस्त्रीरूपसर्वविग्रहावच्छिन्नेशैकत्वविघात इति संप्रतिपादयन्ति।

ननूमारमादीनां बहुषु पुराणेतिहासादिषु शक्तित्वोक्तेः कथं तासामीशरूपत्वमिति चेत्तर्हि—

"सेयं चैतन्यदीप्ता ब्रह्मविष्णुशिवरूपिणी" इति तापनीयादि श्रुतौ।

शक्तयो यस्य देवस्य ब्रह्मविष्णुशिवादिकाः।
भवन्त्यभूतपूर्वस्य तद्विष्णोः परमं पदम्॥ इति वैष्णवे।

सर्वासामेव शक्तीनां ब्रह्मविष्णुशिवात्मिकाः।
प्रधानाः संस्मृता देवाः शक्तयः परमात्मनः॥ इति कौर्मे।

एवमन्येष्वपि पुराणादिषु ब्रह्मादीनामपि शक्तिरूपत्वोक्तेः तेषामपीश्वरत्वं कथं स्यात्। तेषामीश्वरत्वप्रतिपादकशास्त्रीदीशत्वमिति चेत्तर्हि तासामपि तस्मादेवेशत्वमिति न वयं पर्यनुयोक्तव्याः।

यत्रोभयोः समो दोषः परिहारोऽपि वा समः।
नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे॥ इति न्यायात्,

तथा चोभयत्रापि चित्प्राधान्यविवक्षायामीशत्वव्यपदेशः। उपाधिप्राधान्यविवक्षायां शक्तित्वव्यपदेशः। उपाधेर्मिथ्यात्वात्तस्यात्यन्तोपेक्षायां शुद्धनिर्विकल्पचिन्मात्ररूपत्वव्यपदेशश्च तुल्य एव। तस्मान्न कथमपि भेदलेशस्यावकाशः।

येषान्तु मन्दप्रज्ञत्वात्पुनः पुनः श्रूयमाणोऽप्यभेदो न बुद्धिमधिरोहति तैस्तु "उपवासाद् वरं भैक्ष्यम्" इति न्यायेन भेदबुद्धिपूर्वकमपि स्वश्रद्धाविषयलीलाविग्रहावच्छिन्नेशाराधनं कर्तव्यम्।

तदुक्तं वासिष्ठे—

अज्ञातशिवतत्त्वानामाकाराद्यर्चनं कृतम्।
योजनाध्वन्यशक्तस्य क्रोशाध्वा परिकल्प्यते॥ इति।

पूर्वार्धे षष्ठ्यन्तादनन्तरं भेदधीपूर्वकमिति शेषः। आदिना निर्गुणपरिग्रहः। तदुपासनायामपि विचारेऽसमर्थस्य मन्दप्रज्ञस्यैवाधिकारात्।

ईशप्रसादादुत्पन्नायां मेधायां "शालिसमृद्धौ कोद्रवाशनम्" इति न्यायेन त्यक्तव्या भेदधीः। यदि च भेदधीनिन्दाश्रवणात्तस्यापि किञ्चिद् दुरितमुत्पन्नति स्वीक्रियते तर्हि तदपि "कूपखानक" न्यायेनेशोपासनाजन्यसुकृतसन्दोहेन विनाशं गमिष्यति।

वस्तुतस्तु भेदधीनिन्दा कञ्चित्पक्षमाश्रित्य ये दुराग्रहेण भेदबुद्धिं न त्यजन्ति तद्विषया। निरस्तभेदबुद्धयोऽपि जन्मान्तरीयभक्तिप्रवाहानुरोधेनैकविग्रहध्यानादौ एव प्रवर्तन्ते ते तु न निन्द्याः, अनेकमूर्तिध्यानादेर्युगपत्कर्तुमशक्यत्वात्। कालभेदेनानुष्ठाने चित्तस्थैर्यासिद्धेः। अन्यत्र प्रवृत्तस्य जन्मान्तरीयध्यानादिरूपचित्तवृत्तिप्रवाहस्य "निम्नगाप्रवाह" न्यायेन अन्यत्र नयने क्लेशातिशयाच्च।

यथाह भगवान्—

तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम्।
यतते च ततो भूयः संसिद्धौ कुरुनन्दन॥
पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः॥ इत्यादि।

अत एवोक्तं हरिणा—

महेश्वरे वा जगतामधीश्वरे,
जनार्दने वा जगदन्तरात्मनि।
न वस्तुभेदप्रतिपत्तिरस्ति मे,
तथापि भक्तिस्तरुणेन्दुशेखरे॥ इति।

तथापीत्यनन्तरं जन्मान्तरीयसंस्कारवशादित्यध्याहार्यम्।

न च तर्हि तेनैव भेदबुद्ध्यनुवृत्तिरपि स्यात्, परमेश्वरप्रसादितः शाब्ददैशिकपूर्वकाभेदधिया तन्निवृत्तेः। प्रत्यगभिन्नब्रह्मबुद्धावुत्पन्नायां तु सर्वभेदबुद्धिबाधात् "शते पञ्चाशत्" इति न्यायेनास्या अपि बाध्यत्वस्य निर्यत्वसिद्धेश्च।

एकविग्रहविषयकत्वनियमोऽपि धारणाध्यानसमाधीनामेव। बाह्यपूजनकीर्तनश्रवणादिकं तु सर्वविग्रहतत्कीर्तिविषयं कर्तव्यमेव। अन्यथा पञ्चाङ्गपूजाविधानानर्थक्यापत्तिः। "सर्वान् देवान् नमस्यन्ति" इत्यादिना "दुर्गाण्यतितरन्ति ते" इत्यन्तेन भारते सर्वदेवप्रणामादेः दुर्गतरणोपायत्वकीर्तनाच्च।

अयन्तु सर्वोत्तमः पन्थाः—

शिवे च भक्तिर्बहुला यदि स्यात्,
तथा शिवत्वेन भजेद् हरिं हि।

हरौ च भक्तिर्बहुला यदि स्यात्,
तथा हरित्वेन भजेत् शिवं हि ॥ इति ।

तथा विष्णुवदेव भक्त्यतिशयेनेत्यर्थः ।

एनं पन्थानमाश्रितानां हि—

वासुदेवं परित्यज्य योऽन्यं देवमुपासते ।
तृषितो जाह्नवीतीरे कूपं खनति दुर्मतिः ॥
महादेवं परित्यज्य योऽन्यं देवमुपासते ।
स मूढो विषमश्नाति सुधां त्यक्त्वा क्षुधातुरः ॥

इत्यादिनिन्दाविषयताऽपि न भवति ।

यस्तुजन्मान्तरीयदुरितजन्यदुराग्रहवशादेकत्र भक्त्यभिमानेनान्यं निन्दति, पुनः पुनर्बोध्यमानोऽपि चतुर्मार्गेणाभेदं नोपैति भ्रामयति च मन्दान् स "यादृशो यक्षस्तादृशो वलिः" इवि न्यायेन तत्प्रतिपादितोत्कर्षापकर्षविपरीतोत्कर्षापकर्षप्रतिपादनेन सुधीभिर्विजित्य पश्चात्पूर्वोक्तश्रुतिस्मृतियुक्तिभिरत्यन्ताभेदप्रतिपादनेन बोधनीयः ।

अत एव श्रीमदप्पदीक्षितैः शिवद्वेषिवैष्णवम्मन्यरामानुजाद्यनुयायिभिः प्रतिपादितविष्णूत्कर्षशिवापकर्षविपरीतोत्कर्षापकर्षप्रतिपादनपरैः शिवनिन्दा वारणाय स्वानुयायिनां शिवविष्ण्वादिषूत्कर्षापकर्षबुद्धयनुवृत्तिवारणाय चोक्तम्—

विष्णुर्वा शङ्करो वा श्रुतिशिखरगिरामस्तु तात्पर्यभूमि-
र्नास्माकं तत्र वादः प्रसरति किमपि स्पष्टमद्वैतभाजाम् ।
किन्त्वीषद्द्वेषगाढानलविकलहृदां दुर्मतीनां दुरुक्ती-
र्भङ्क्तुं यत्नो ममायं न हि भवतु ततो विष्णुविद्वेषशङ्का ॥ इति ।

रामानुजाद्यनुयायिनो हि स्वमतानुयायिनः शूद्रानपि नमस्कुर्वन्तिन च शुम्भुम् । अतस्ते दुर्मतीनामिति विशेषिताः ।

स्पष्टीकृतञ्चैतच्छिवतत्त्वविवेके तैः —

अनन्यप्राप्यं ते कमपि महिमानं प्रकटय-
न्त्यसंख्येया मन्त्रा निरवधिनमस्कारघटिताः ।
स्वयं शूद्रादीनामपि च निपतन्तश्चरणयो-
र्नमस्कारे भारं तव दधति मूर्खा न तु बुधाः ॥ इति ।

व्याख्यातश्चैष श्लोकः—

चतुष्टयेऽपि वेदानां चन्द्रशेखरगोचराः ।
मन्त्राः प्रायेण दृश्यन्ते तन्नमस्कारशेखराः ॥

द्विरुक्तैः सकृदाम्नातैराद्यन्तपठितैरपि ।
अलङ्कृता नमस्कारैरसंख्यास्ते इति स्फुटम् ॥

इत्यादिना स्वयं तैः । अन्यत्र च तैरेव हरेर्नित्यमुक्तत्वनिरवग्रहैश्वर्यमुक्तप्राप्यत्व-समानाधिकराहित्याद्यनन्तकल्याणगुणनिधानपरमेश्वररूपत्वस्य संप्रतिपादनात्तेषां धीः प्रागुदाहृततच्छ्लोकप्रतिपादितार्थनिष्ठैवेति गम्यते । तथा हि—

सिद्धान्तलेशे तावदथ विद्योदये सत्युपाधिविलयादपेतजीवभावस्य किमीश्वर-भावापत्तिरुत शुद्धचैतन्यमात्ररूपेणावस्थानमिति विवेचनीयमितिकल्पपूर्वकमेतदर्थं-विचारं प्रतिज्ञाय तत्र मतभेदेन बहून् पक्षानुपन्यस्य चान्ते बिम्बप्रतिबिम्बयोर्बिम्ब-स्थानीयईश्वरः उभयानुस्यूतं शुद्धचैतन्यमिति पक्षे तु मुक्तस्य यावत्सर्वमुक्तिसर्वज्ञत्व-सर्वकर्तृत्वसत्यकामत्वादिगुणपरमेश्वरभावापत्तिरिष्यते ।

यथाऽनेकेषु दर्पणेष्वेकस्य प्रतिबिम्बे सत्येकदर्पणानयने तत्प्रतिबिम्बो बिम्ब-भावेनावतिष्ठते न तु मुखमात्ररूपेण तदानीमपि दर्पणान्तरसन्निधानप्रयुक्तस्य मुखे बिम्बत्वस्यानपायात् । तथा एकस्य ब्रह्मचैतन्यस्यानेकेषूपाधिषु प्रतिबिम्बे सति एकस्मिन् प्रतिबिम्बे विद्योदये तेन तदुपाधिविलये तत्प्रतिबिम्बस्य बिम्बभावेनावस्थानावश्यं-भावात् । न च मुक्तस्याविद्याऽभावात्सत्यकामादिविशिष्टसर्वेश्वरत्वानुपपत्तिः । तदवि-द्याऽभावेऽपि तदानीं बद्धपुरुषान्तराविद्यासत्त्वात् । नहीश्वरस्येश्वरत्वं सत्यकाम-त्वादिगुणविशिष्टत्वं च स्तो विद्याकृतम्, तस्य निरञ्जनत्वात् । किन्तु बद्धपुरुषावि-द्याकृतमेतत्सर्वमेष्टव्यम् ।

न च यथाऽक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति, तं यथायथोपस्ते इत्यादि श्रुतिषु सगुणोपासकानामपि ईश्वरसायुज्यश्रवणान्मुक्तेः सगुणविद्याफलावि-शेषापत्तिः ।

सगुणोपासकानामखण्डसाक्षात्काराभावान्नाविद्या निवृत्तिर्न वा मूलाहङ्कारादे-विलयः, आवरणानिवृत्तेर्नाखण्डानन्दस्फुरणं जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च भोगमात्रसाम्यलिङ्गाच्चेत्यादिसूत्रोक्तन्यायेन तेषां परमेश्वरेण भोगमात्रसाम्येऽपि संकल्पमात्रात्स्वभोगोपयुक्तदिव्यदेहेन्द्रियवनितादिसृष्टिसंहारादिस्वातन्त्र्यलक्षणं न निर-वग्रहमैश्वर्यम् । मुक्तानान्तु निःसन्धिबन्धमीश्वरभावं प्राप्तानां तत्सर्वमिति महतो विशेषस्य संभवादिति मुक्तानामीश्वरभावापत्तिं संप्रतिपाद्य न च परमेश्वरस्य रघु-नाथाद्यवतारे तमस्वित्वदुःखसंगादिश्रवणान्मुक्तानामीश्वरभावे पुनर्बन्धापत्तिरित्या-शङ्क्य तस्य विप्रशापामोघत्वादिस्वकृतमर्यादापरिपालनाय कथञ्चिद् भृगुशापादि सत्त्वं प्रत्याययितु नटवदीश्वरस्य तदभिनयमात्रपरत्वात् ।

अन्यथा तस्य नित्यमुक्तत्वनिरवग्रहस्वातन्त्र्यसमाभ्यधिकराहित्यादिश्रुति-विरोधादिति समाहितम् ।

नद्येतत्समाधाने श्रीविष्णोः कुतश्चिदपकर्षः संभवति। हरेरतीवमाहात्म्योपपादकवरदराजस्तवादिनिर्माणेन तस्मिन्नतीवस्वभक्तिश्च प्रदर्शिता।

शिवतत्त्वविवेके च सर्वेषां स्व स्व कार्येषु प्रवृत्तिरूपपादिता। शैवादिषु पुराणेषु तत्पशुत्वोक्त्यनन्तरं कौर्मादौ कर्मयोगस्य वर्णितस्य प्रपञ्चतः तदाराधनरूपत्वं विस्पष्टं प्रतिपादितम्—

रुद्रं सत्कर्मभिर्मर्त्याः पूजयन्तीह दैवतम्।
इत्यादि भारतेऽप्युक्तं पर्वस्वारण्यकादिषु॥ इति।

स्व स्व वर्णाश्रमविहितसर्वकर्माराध्यत्वं श्रीशम्भोः प्रतिपाद्य,

वर्णाश्रमाचारवता पुरुषेण परः पुमान्। इत्यादि विष्णुपुराणादिवचनानां श्रीविष्णोः सर्वकर्माराध्यत्वप्रतिपादकानां विरोधमाशङ्क्य च,

इत्यादेर्न विरोधो नः शिवाभेदाद् रमापतेः। इति समाहितं तैरेवं।

ये तु विष्णुशिवाभेदमसहमाना जन्मान्तरीयदुरितसन्दोहजन्यशिवद्वेषात्तदपकर्षं प्रतिपादयन्ति तेषां मुखभञ्जनायैव तैः स्वानभिमतमपि भेदं स्वीकृत्यानन्तरं "यादृशं मुखं तादृशी चपेटा" इतिन्यायेन भेदवादे तयोस्तस्य स्वार्थत्यागस्तु निश्चितः शिवं प्रति न युज्येत्, पशुत्वं ह्ययन्यथात्मनामित्थं सेवा महेशस्य सर्वेषां स्व स्व कर्मभिः नियतेति स्थितम्।

किञ्च सर्वेषामेव देहिनां शिवलिङ्गार्चकत्वं च भारतादिषु वर्णितम्—

यस्य ब्रह्मा च विष्णुश्च त्वं च शक्रसहामरैः।
अर्चयन्ति सदा लिङ्गं तस्माच्छ्रेष्ठतरो हि कः॥ इत्यादिना।

विष्ण्वाद्यपकर्षोपपादनपूर्वकं शिवोत्कर्षोऽतीवप्रपञ्चितः। एवमन्यत्राप्येतेषामन्येषां च शैवानां वैष्णवानाञ्च शिष्टानामन्नापकर्षोक्तिपूर्वकस्वेष्टदेवोत्कर्षोक्तिः दुर्जनमुखचपेटारूपैवेति बोध्यम्। न तु वस्तुतः कस्यापि शिष्टस्य तात्पर्यमस्ति। तस्मादिदानीन्तनैरपि शिष्टैर्हरिहरादभेदबुद्धिः श्वमांसेव श्वपाकी दूरतस्त्याज्या। ये तु दुराग्रहात्तां न त्यजन्ति ते न भक्ताः, नरकस्मरणविरोधात्, किन्तु नास्तिका एवेति दिक्।

पराश्रेयः कामैर्विधुवदभिरामैः सुमतिभिः,
शिवादीनामैक्ये श्रुतिगणपुराणादि पठिते।
सदा स्थाप्या बुद्धिर्न तु परभिदायामपि कदा-
दरो दुर्गत्यादेर्निजमनसि देयो हि सततम्॥

श्रुतिस्मृतीतिहासाद्यैः सिद्धाभेदापमानिनः।
ये ते चेदास्तिकास्तर्हि नास्तिका वद कीदृशाः॥

आनन्दामृतसागरे सुमनसां ध्यानादिमन्थोद्भवः,
प्रेमाख्यो हि हिमांशुराविभवन्पुण्यौघरश्मिव्रजः।
स्वर्येस्मिन् स सुशैत्यसंचरवशात्सान्द्रत्वमापादयन्
मन्ये तेन सुखाम्बुधिर्विजयते संप्राप्य मूर्तित्रयम् ॥ इति।

"एकमेवाद्वितीयं" "नेह नानास्ति किञ्चन" "अथात आदेशो नेति नेति" यदाह्येवैष एतास्मिन्नदृश्येऽनात्म्ये निरुक्ते निलयनेऽभयप्रतिष्ठां विन्दतेऽथ सोऽभयं गतो भवति" यदाह्येवैष एतस्मिन्नुदरमन्तरं कुरुतेऽथ तस्य भयं भवति "द्वितीयाद् वै भयं भवति" "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" इत्यादिकाः श्रुतयस्तु जीवेशयोर्जीवानां च परस्परमात्मानात्मनोरनात्मनाञ्चान्योन्यं भेदमपि वास्तवं न सहन्ते।

नानेवेतीवशब्देन यो व्यावहारिकमपि नानात्वं जीवेशादिभेदं पश्यति सोऽपि मृत्योरनर्थात् मृत्युमनर्थान्तरं प्राप्नोति चेत्तर्हि यो वास्तवं नानात्वं पश्यति तस्य का कथेति सूचितम्। तस्मात्तुच्छमेव द्रष्टव्यम्। तत्तुच्छत्वबोधश्च। तत्त्वमसि, एकमेवाद्वितीयं ब्रह्म, नेह नानास्ति किञ्चन, अथात आदेशो नेति नेति, इत्यादिश्रुतिभिर्भवति। तदुक्तम्—

तुच्छाऽनिर्वचनीया च वास्तवी चेत्यसौ त्रिधा।
ज्ञेया माया त्रिभिर्बोधैः श्रौतयौक्तिकलौकिकैः ॥ इति।

परन्तु वास्तवनानात्वभ्रमनिरासाय "सोपानारोहण"न्यायेन तत्तुच्छत्वबोधोदयाय च तदनिर्वचनीयत्वबोधकसत्तर्का अप्युपेयाः। न हि श्रुतिभिरपि सकृदेव भेदतुच्छत्वं बोधयितुं शक्यम्, जातोऽपि वा बाधो न स्थिरी भवति, अन्यथा मननविधानानर्थक्य प्रसंगः स्यात्।

एतत्सर्वविधभेदशून्येऽद्वैतवस्तुनि किं मानम्, न तावत्प्रत्यक्षम्, द्वैतविषयत्वात्तस्य अथ द्वैतस्याविद्याविलासतया जडत्वात्स्वत एवावृते तस्मिन् अज्ञानकृत्यायोग्येऽज्ञातज्ञापकप्रमाणप्रवृत्त्यनुपपत्तेः सर्वं प्रमाणं चिन्मात्राद्वैतगोचरमेव। इन्द्रियान्वय व्यतिरेकयोरपि द्वैताधिष्ठानसन्मात्रग्रहणेनान्यथासिद्धत्वात्।

रज्ज्वादिसंयोगानन्तरं जायमानसर्पादिप्रतीतेरिव द्वैतप्रतीतेरपीन्द्रियान्वयव्यतिरेकानुविधायिन्या भ्रान्तित्वोपपत्तेरिति चेन्न, अधिष्ठानस्य रूपादिरहितद्रव्यत्वेनेन्द्रियगोचरत्वानर्हत्वात्।

न च सर्पादेरिव द्वैतस्य कल्पितत्वं शक्यते निरूपयितुम्, भ्रान्तिबाधयोरसत्त्वात्। अधिष्ठानस्य प्रत्यक्षादिगोचरत्वे च भ्रान्तेरेवानुपपत्त्या सर्वदाद्वैतानुदयप्रसङ्गात्। न चेदमित्यधिष्ठानप्रत्यक्षेऽपि सर्पभ्रान्तेरिवाद्वैतेऽपि भ्रान्तेः काऽनुपपत्तिः। रज्ज्वादेरनेकात्मकत्वेन सामान्यरूपेण भानेऽपि विशेषरूपेणाभानाद् भ्रान्त्युपपत्तेः अद्वैतस्यत्वखण्डरूपत्वाङ्गीकारेण तत्प्रत्यक्षे भ्रान्त्यसंभवात् तस्मान्नाद्वैते प्रत्यक्षं प्रमाणं नाप्यनुमानादिकं